लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥१८७॥
नखिनां शृङ्गिणां चैव दंष्ट्रिणामाततायिनाम् ।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् ॥१८८॥
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥१८९॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥१९०॥
उद्यतासिविषाग्निं च शापोद्यतकरं तथा ।
आथर्वणेन हन्तारं पिशुनं चैव राजसु ॥१९१॥
भार्यातिक्रमणं चैव विद्यात्सप्താततायिनः ।
यशोवित्तहरानन्यानाहुर्धर्मार्थहारकान् ॥१९२॥
उद्देषतस्ते कथितो घोरे दण्डविधिर्मया ।
सर्वेषामपराधानां विस्तरादतिविस्तरः ॥१९३॥
अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः ।

---

192 om. V[4].

---

188. नखिनो व्याघ्रादयः । शृङ्गिणो गोव्यतिरिक्ता अजादयः । दंष्ट्रिणो वराहादयः । अन्येषां मेषमहिषादीनां... तेषां मरणाभिसंधिनाधावतां वधे... 189. गुरुराचार्यो... यद्यपि बहुश्रुत इत्यनेनैव ब्राह्मणोपलब्धिस्तथापि... ब्राह्मणस्य... पुनरुपादानम् एषामन्यतमम्... 191... राजसु पिशुनं परदोषनिवेदकं विवादमन्तरेण ।... 192. भार्यां परकीयामननुरक्तामतिक्रमितुं बलाद्भोक्तुं शीलमस्यासौ ।...धर्महरस्तडागादिभेदकः । अर्थो गृहक्षेत्रादिस्तद्धरश्चेत्यादीनन्यानप्याततायिनो धर्मज्ञा आहुः ।...

दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह ॥१९४॥
दण्ड्यं प्रमोचयन्दण्ड्याद्द्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥१९५॥
यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥१९६॥५॥

अथोत्तमर्णोऽधमर्णाद्यथादत्तमर्थं गृह्णीयात् । १ । द्विकं त्रिकं चतुष्कं पञ्चकं च शतं वर्णानुक्रमेण प्रतिमासम् । २ । सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः । ३ । अकृतामपि वत्सरातिक्रमेण यथाविहिताम् । ४ । आध्युपभोगे वृद्ध्यभावः ।५। दैवराजोपघाताहृते विनष्टमाधिमुत्तमर्णो दद्यात् । ६ । अन्तवृद्धौ प्रविष्टायामपि ।७। न स्थावरमाधिमृते वचनात् । ८ । गृहीतधनप्रवेशा-

VI, 1. अत्रो॰ $V^4$. 4. ॰विहितम् $V^{1-4}$ ; ॰विहिताम् $C^{1,2}$ N. ; ॰विहितात् v. 7. अन्त्यवृद्धौ $V^{1-4}$ ; अन्त्या॰ v.

195. यो दण्डाधिकारे राज्ञा नियुक्तः स चेद्दण्ड्यमदण्डयिस्वैव मुञ्चति... VI, 2. वृद्धिपरिमाणमाह ।... इदं (इयं ?) बन्धालम्भके प्रयोगे च वृद्धिः ।... 5. ...तत्र गोप्यस्याधेर्भोगे वृद्धिं न लभेतेत्यर्थः ॥ 7. ... अन्तवृद्धिर्वृद्धेरन्तम्... तस्मिन्प्रविष्टे... आधिमुत्तमर्णोऽधमर्णाय दद्यात् । ... 8. यावद्वृद्धिलाभमेव त्वयेदमाम्रवनाद्युपभोक्तव्यमिति वचनव्यक्तिं विना यत्र वृद्ध्यपकरणायाम्रवनादि स्थावरमाधीकृतं तत्रान्तवृद्धिप्रवेशेऽपि न तदुत्तमर्णो दद्यात्किंतु तदनन्तरं भुञ्जीतैव यावन्मूललाभम् ।...

र्थमेव यत्स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात्। ९। दीयमानं प्रयुक्तमर्थमुत्तमर्णस्यागृह्णतस्ततः परं न वर्धते।१०। हिरण्यस्य परा वृद्धिर्द्विगुणा।११। धान्यस्य त्रिगुणा। १२। वस्त्रस्य चतुर्गुणा। १३। रसस्याष्टगुणा। १४। संततिः स्त्रीपशूनाम्। १५। किण्वकार्पाससूत्रचर्मायुधेष्टकाङ्गाराणामक्षया। १६। अनुक्तानां द्विगुणा। १७। प्रयुक्तमर्थं यथा कथंचित्साधयन्न राज्ञो वाच्यः स्यात्। १८। साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यः। १९। उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसंमितं दण्डं दद्यात्।२०। प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम्। २१। सर्वापलाप्यैकदेशविभावितोऽपि सर्वं दद्यात्। २२। तस्य च भावनास्तिस्रो भवन्ति लिखितं साक्षिणः समयक्रिया च। २३। ससाक्षिकमाप्तं ससाक्षिकमेव दद्यात्। २४। लिखितार्थे प्रविष्टे लिखितं पाटयेत्। २५। असमग्रदाने लेख्यासंनिधाने चोत्तमर्णः स्वलिखितं दद्यात्। २६।

---

14 om. $C^{1,2}$v.    18. तिष्ठत्यकथंचित् $V^4$ for प्रयुक्तमर्थं यथाकथंचित्।    25. लिखितार्थप्रविष्टो $V^{1-3}$ $C^{1,2}$; लिखितान्ते प्रविष्टे v.

---

14. रसस्य तैलघृतादेः ...    16. ...एषामक्षया वृद्धिः कदापि न निवर्तत इत्यर्थः।...    25. लिखितार्थो गृहीतमृणम्। तस्मिन्नुत्तमर्णे प्रविष्टे सति तल्लिखितमृणपत्रं पाटयेच्छिन्द्यात्।...

धनग्राहिणि प्रेते प्रव्रजिते द्विदश समाः प्रवसिते वा तत्पुत्रपौत्रैर्धनं देयम् ।२७। नातः परमनिच्छुभिः ।२८। सपुत्रस्य वाप्यपुत्रस्य वा रिक्थग्राही ऋणं दद्यात् ।२९। निर्धनस्य स्त्रीग्राही । ३० । न स्त्री पतिपुत्रकृतम् ।३१। न स्त्रीकृतं पतिपुत्रौ । ३२ । न पिता पुत्रकृतम् । ३३ । अविभक्तैः कृतमृणं यस्तिष्ठेत्स दद्यात् ।३४। पैतृकमृणमविभक्तानां भ्रातॄणां च । ३५ । विभक्ताश्च दायानुरूपमंशम् ।३६। गोपशौण्डिकशैलूषरजकव्याधस्त्रीणां पतिर्दद्यात् । ३७ । वाक्प्रतिपन्नं कुटुम्बिना देयम् । ३८ । कस्यचित्कुटुम्बार्थे कृतं च । ३९ ।

यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्तथा वृद्धिमवाप्नुयात् ॥४०॥
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।

---

28. अनीप्सुभिः । $C^{1,2}$v. 29. वापुत्रस्य $C.^{1,2}$ ; om. v. 38, 39. वा० नादेयं कस्यचित् । कुटुम्बार्थे कृतं च । all. See, however, Colebrooke, Dig I, 5, CXCII.

---

30. यदि धनाभावे रिक्थग्राही नास्ति तदा यो यदीयां स्त्रियं भार्यात्वेन स्वीकरोति स तदीयमृणं दद्यात् ।... 35. विभागात्प्राक्पित्रा कृतमृणमविभक्तानां भ्रातॄणां चकारात्पौत्राणां संभूय देयं भवति ।... 37. ...तदधीनवृत्तित्वात् ।... 40. यः सर्वमृणं हिरण्यं धान्यादि गृहीत्वा श्वः परश्वो वेत्यादि कृतेऽवधौ सामकं सममेव दास्यामीति प्रतिज्ञाय पश्चाल्लोभादिना कृतेऽवधौ न दद्यात्...

आद्यौ तु वितथे दाप्याावितरस्य सुता अपि ॥४१॥
बहवश्चेत्प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम् ।
अर्थेऽविशेषिते त्वेषु धनिकच्छन्दतः क्रिया ॥४२॥
यमर्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।
ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति ॥४३॥ ६ ॥

---

अथ लेख्यं त्रिविधम् । १ । राजसाक्षिकं ससाक्षिकमसाक्षिकं च । २ । राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं राजसाक्षिकम् ।३। यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकम् ।४। स्वहस्तलिखितमसाक्षिकम् ।५। तद्बलात्कारितमप्रमाणम् । ६ । उपधिकृताश्च सर्व एव । ७ । दूषितकर्मदुष्टसाक्ष्यङ्कितं ससाक्षिकमपि । ८ । तादृग्विधेन लेखकेन लिखितं च ।९। स्त्रीबालास्वतंत्रमत्तोन्मत्तभीत-

---

VII, 9. लेखकेन om. $C^{1,2}$v.

---

42. ...यथाकृतमहमेतावदर्थं दास्यामीति स्वस्वाभ्युपगतमर्थं दद्युः । यदा तु समांशतया विषमांशतया वार्थो न विशेषितः संपूर्णो वा प्रत्येकमभ्युपगतस्तदा प्रतिभुषु धनिकच्छन्दतो धनिकेच्छया क्रियार्थादानं भवति । यस्मादिच्छेत्तस्माद् गृह्णीयादित्यर्थः ।... VII, 3. ...तस्यां सभायां योऽध्यक्षः प्राड्विवाकस्तस्य करचिह्नेन युक्तम् ।... 4. यत्र क्वचनेत्यनेन राजसभाया अनियमः... 7. उपधिना छलेन कृताः सर्व एव लेख्य (लेखा ?) अप्रमाणम् ।... 8. दूषिता लोभादिहेतुभिर्वादिना । कर्मदुष्टाश्चौर्यादिकर्मभिर्ये स्वयमेव दुष्टास्तादृशैः साक्षिभिर्यदङ्कितं तत्ससाक्षिकमप्यप्रमाणम् ।...

ताडितकृतं च । १० । देशाचाराविरुद्धं व्यक्ताधिविधिलक्षणमलुप्तक्रमाक्षरं प्रमाणम् । ११ ।

वर्णैश्च तत्कृतैश्चिह्नैः पत्रैरेव च युक्तिभिः ।
संदिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपकैः ॥१२॥
यत्रर्णी धनिको वापि साक्षी वा लेखकोऽपि वा ।
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् ॥१३॥७॥

---

अथासाक्षिणः । १ । न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाहसिकातिवृद्धमत्तोन्मत्ताभिशस्तपतितक्षुत्तृष्णार्तव्यसनिरागान्धाः । २ । रिपुमित्रार्थसंबन्धिविकर्मदृष्टदोषसहायाश्च । ३ । अनिर्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात् । ४ । एकश्चासाक्षी । ५ । स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्ष्याः । ६ । अथ साक्षिणः । ७ । कुलजा वृत्तवित्तसंपन्ना

11. व्यक्ताधिकृत० V1–4 C1,2; व्यक्ताविकृत० v; व्यक्ताविकृति० or व्यक्ताधिविधि० Nârada 4, 60. See the C. 12. प्रतिरूपितैः ॥ V1–3 C1,2 N. VIII, I. अथ साक्षिणः V1–3 C1,2v. 3. ०विकर्मि० V1–4.

11....व्यक्ताधिविधिलक्षणमिति पाठे व्यक्तस्य स्पष्टमाधिविधेराधीकरणस्य लक्षणं...यस्मिन्नित्यर्थः ।...12. तत्कृतैर्वर्णैस्तल्लिखितैः पत्राक्षरैः । तत्कृतैश्चिह्नैः श्रीकारादिभिः । तत्कृतैः पत्रैः पत्रान्तरैश्चाक्षरसादृश्यनिरूपणेन । युक्तिभिः...अनयोरेवंविधो व्यवहारोऽस्मिन्देशेऽस्मिन्काले समाव्यत (?) इत्यादिभिः । तथा तस्मिन्पत्रे या युक्तयो लिखनपरिपाय(०पाट्य ?)स्तासां प्रतिरूपितानि सदृशलिखनानि तैश्च साधयेत् ।...

यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धाश्च । ८ । अभिहितगुणसंपन्न उभयानुमत एकोऽपि । ९ । द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः । १० । आधर्यं कार्यवशाद्यत्र पूर्वपक्षस्य भवेत्तत्र प्रतिवादिनोऽपि । ११ । उद्दिष्टसाक्षिणि मृते देशान्तरगते वा तदभिहितश्रोतारः प्रमाणम् । ।१२। समक्षदर्शनात्साक्षी श्रवणाद्वा । १३ । साक्षिणश्च सत्येन पूयन्ते । १४ । वर्णिनां यत्र वधस्तत्रानृतेन । १५ । तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहुयात् । १६ । शूद्र एकाह्निकं गोदशकस्य ग्रासं दद्यात् । १७ । स्वभावविकृतौ मुखवर्णविनाशेऽसंबद्धप्रलापे च कूटसाक्षिणं विद्यात् । १८ । साक्षिणश्चाहूयादित्योदये कृतशपथान्पृच्छेत् । १९ । ब्रूहीति ब्राह्मणं पृच्छेत् । २० । सत्यं ब्रूहीति राजन्यम् । २१ । गोबीजकाञ्चनैर्वैश्यम् । २२ । सर्वमहापातकैस्तु शूद्रम् । २३ । साक्षिणश्च श्रावयेत् ।

---

13 om. V⁴. 15. तत्रानृतं वदन्न दुष्यति । V⁴. 18. विन्द्यात् । V⁴.,

---

VIII, 9. अभिहितैः कुलजन्मादिभिर्गुणैः संपन्नो यद्युभाभ्यामर्थिप्रत्यर्थिभ्यामप्युपगम्यते तदा एकोऽपि... 10 ..तत्र यो मदीयं धारयसीति ब्रूते स पूर्ववादी पूर्वपक्षी वादी... II. यत्र पूर्वपक्षस्य ऋणाद्यभियोगस्य कार्यवशात्प्रतिदानादिवशाद्...आधार्यमधरीभावोऽसाध्यता भवति ।... 22. गोबीजकाञ्चनानि ते निष्फलानीति शापितं वैश्यं पृच्छेत् ।...

। २४ । ये महापातकिनां लोका ये चोपपातकिनां ते कूटसाक्षिणामपि । २५ । जननमरणान्तरे कृतसुकृतहानिश्च । २६ । सत्येनादित्यस्तपति । २७ । सत्येन भाति चन्द्रमाः । २८ । सत्येन वाति पवनः । २९ । सत्येन भूर्धारयति । ३० । सत्येनापस्तिष्ठन्ति । ३१ । सत्येनाग्निः । ३२ । खं च सत्येन । ३३ । सत्येन देवाः । ३४ । सत्येन यज्ञाः । ३५ ।

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥३६॥
जानन्तोऽपि हि ये साक्ष्ये तूष्णींभूता उपासते ।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चाप्यथ ।
एवं हि साक्षिणः पृच्छेद्वर्णानुक्रमतो नृपः ॥३७॥
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥३८॥
बहुत्वं प्रतिगृह्णीयात्साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ॥३९॥
यस्मिन्यस्मिन्विवादे तु कूटसाक्ष्यनृतं वदेत् ।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥४०॥८॥

---

26. ०सुकृत० om. $C^{1,2}$v. 32. सत्येनाग्निस्तिष्ठति । $C^{1,2}$; om. v.

---

25. महापातकिनो ब्रह्महादयः । उपपातकिनो गोघ्नादयः ।...

अथ समयक्रिया । १ । राजद्रोहसाहसेषु यथाकामम् । २ । निक्षेपस्तेयेष्ववर्थप्रमाणम् । ३ । सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् । ४ । तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत् । ५ । द्विकृष्णलोने तिलकरम् । ६ । त्रिकृष्णलोने रजतकरम् । ७ । चतुःकृष्णलोने सुवर्णकरम् । ८ । पञ्चकृष्णलोने सीतोद्धृतमहीकरम् । ९ । सुवर्णार्धोने कोशो देयः शूद्रस्य । १० । ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम् । ११ । द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य । १२ । त्रिगुणे राजन्यस्य । १३ । कोशवर्जं चतुर्गुणे ब्राह्मणस्य । १४ । न ब्राह्मणस्य कोशं दद्यात् । १५ । अन्यत्रागामिकालसमयनिबन्धनक्रियातः । १६ । कोशस्थाने ब्राह्मणं सीतोद्धृतम-

IX, 4. एवार्थेषु $C^{1,2}$; एवार्णजातेषु v. 7. ०मही० om. V4. 10. सुवर्णार्धे $C^{1,2}$.

IX, 1.... अलौकिकं प्रमाणं समयः ।... 3. निक्षेपापह्नवे चौर्याभियोगे बहुवचनात्साहसे च विप्रतिपन्नस्यार्थस्य प्रमाणं कल्पयित्वा दिव्यं स्थापयेत् । 4. निक्षेपापह्नवादिविषयेषु सर्वेष्वप्यर्थजातेषु परिमाणं कल्पयित्वा तन्मूल्यत्वेन सुवर्णं कल्पयेत् । प्रमाणेन दिव्यव्यवस्थेति ।... 12. ये...शपथाः शूद्रस्योक्तास्त एवैतत्परिमाणाद् द्विगुणपरिमाणे...हेम्नि क्रमाद्वैश्यस्य भवन्ति ।...16. आगामिकालो भावो ।...तत्र यः समयः विश्वासस्तन्निबन्धना तद्धेतुः क्रिया प्रमाणं तामन्यत्र विनेत्यर्थः । भाविविश्वासार्थे ब्राह्मणस्यापि कोशो भवतीति तात्पर्यम् । यथाह पितामहः । शङ्काविश्वाससंधाने विभागे रिक्थिनां तथा । क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ।...

ह्रीकरमेव शापयेत् । १७ । प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । १८ । सत्सु विदितं सच्चरित्रं न महत्यर्थेऽपि । १९ । अभियोक्ता वर्तयेच्छीर्षम् । । २० । अभियुक्तश्च दिव्यं कुर्यात् । २१ । राजद्रोहसाहसेषु विनापि शीर्षवर्तनात् । २२ । स्त्रीब्राह्मणविकलासमर्थरोगिणां तुला देया । २३ । सा च न वाति वायौ । । २४ । न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः । २५ । शरद्ग्रीष्मयोश्च । २६ । न कुष्ठिपैत्तिकब्राह्मणानां विषं देयम् । । २७ । प्रावृषि च । २८ । न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् । २९ । हेमन्तशिशिरयोश्च । ३० । न नास्तिकेभ्यः कोशो देयः । ३१ । न देशे व्याधिमरकोपसृष्टे च । ३२ ।

सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि देवब्राह्मणसंनिधौ ॥३३॥९॥

---

19. विदितसच्चरित्रं $C^{1,2}$; विदितसच्चरित्रो v; प्रथितं सच्चरित्रं Ap. 26 शरद्ग्रीष्मयोः । $V^4$. 29. ०व्याध्यर्दितभीरूणां $V^4$. 30 ०शिशिरयोः । v. 31. न om $C^{1,2}$.

---

19. सत्सु शिष्टेषु...शिष्टत्वेन विदितम् ।...20....शीर्षं विवादपराजयनिमित्तं पणं वर्तयेदङ्गीकुर्यात् । 23. असमर्थोऽतिवार्धकेन...29...अम्बुनि जले जीवनं येषां कैवर्तादीनाम्... 33...ब्राह्मणानां सभ्यानामन्येषां च...

अथ घटः । १ । चतुर्हस्तोच्छ्रितो द्विहस्तायतः । २ । तत्र सारवृक्षोद्भवा पञ्चहस्तायतोभयतःशिक्या तुला । ३ । तां च सुवर्णकारकांस्यकाराणामन्यतमो बिभृयात् । ४ । तत्र चैकस्मिन्शिक्ये पूरुषमारोपयेद् द्वितीये प्रतिमानं शिलादि । ५ । प्रतिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत् । ६ । घटं च समयेन गृह्णीयात् । ७ । तुलाधारं च । ८ ।

ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणाम् ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥९॥

---

X, 5. पुरुषं दिव्यकारिणम् V[4]. The latter word from the C. 9. ब्रह्मघ्नो...कूटसाक्षिणः । C[1,2]; ब्रह्मणो... v.

---

X, 1. घटः पादाक्षतुलादीनां समुदायस्तद्विधिरभिधीयत इति । घटनिर्माणप्रकारमाह । 2...घटोच्छ्रयायामौ स्तम्भोच्छ्रयायामाभ्यां भवत इति तावनेनोक्तौ । उच्छ्रयवचनान्निखननीयभागातिरिक्तमिदं परिमाणमित्युक्तम् ।... 3. तत्र...मध्ये प्रान्तयोश्च लोहलावलय(०लम्ब०)कर्कटोपेता उभयतोऽवलम्बितशिक्या तुलाक्षमध्यावलम्बिकर्कटेऽवलम्बनीया ।...4. बिभृयात्परीक्षावलं च (०लंब०) समां कुर्यात् ।...5. पुरुषं दिव्यकारिणम्...शिलादि शिलेष्टकामृदाद्यारोपयेत् ।... 6. सुचिह्नितौ प्रतिमानं द्रव्यान्तरागमापगमशङ्कानिवृत्त्यै पुरुषं च वस्त्रालंकारादिन्यूनाधिकशङ्कानिवृत्त्यै राजमुद्रादिना सम्यक्चिह्नितौ कृत्वा पुरुषं...अवतारयेत् । अन्ये तु तुला प्रान्तयोरवलम्बस्पष्टभागेऽप्यङ्ककरणं व्याचक्षते ।... 7...घटं तुलां समयेन शपथेन वक्ष्यमाणेन गृह्णीयात् नियमयेत् ।...8. यः सुवर्णकाराद्यन्यतमस्तुलां धारयति तमपि शपथेन नियमयेत् ।...

धर्मपर्यायवचनैर्धट इत्यभिधीयसे ।
त्वमेव घट जानीषे न विदुर्यानि मानुषाः ॥ १० ॥
व्यवहाराभिशस्तोऽयं मानुषस्तुल्यते त्वयि ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ११ ॥
ततस्त्वारोपयेच्छिक्ये भूय एवाथ तं नरम् ।
तुलितो यदि वर्धेत ततः स धर्मतः शुचिः ॥ १२ ॥
शिक्यच्छेदाक्षभङ्गेषु भूयस्त्वारोपयेन्नरम् ।
एवं निःसंशयं ज्ञानं यतो भवति निर्णयः ॥१३॥१०॥

---

अथाग्निः । १ । षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यात् । २ । ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्राणि करयोर्दद्यात् । ३ । तानि च करद्वयसहितानि सूत्रेण वेष्टयेत् । ४ । ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समं न्यसेत् । ५ । तमादाय नातिद्रुतं

10. अभिधीयते V1-3 C1,2v. See the C. XI, 3. ०पर्णानि V4.

10. घटशब्दो धर्मपर्यायस्तेनाभिधीयमानत्वाद्धर्ममूर्तिस्तया मानुषैर्दुर्विज्ञेयानि प्रत्यक्षतया त्वं जानीषे ।...पितामहस्तु धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् । धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे ।...XI, 3. ततो वक्ष्यमाणव्रीहिमर्दनहस्ताङ्ककरणानन्तरम्... 4. तान्यश्वत्थपत्राण्यर्कपत्राणि वा दद्यात् । द्वाभ्यां कराभ्यामञ्जलीकृताभ्यां सह श्वेतेन सूत्रेण सप्तवारं मृयेत् (मव्येत् ?) ।... 5. ततः...अभिमन्त्रणानन्तरम्...

नातिविलम्बितं मण्डलेषु पदन्यासं कुर्वन्व्रजेत् । ६ ।
ततः सप्तमं मण्लमतीत्य भूमौ लोहपिण्डं जह्यात् ।७।
यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥ ८ ॥
भयाद्वा पातयेद्यस्तु दग्धो वा न विभाव्यते ।
पुनस्तं हारयेल्लोहं समयस्याविशोधनात् ॥ ९ ॥
करौ विमृदितव्रीहेस्तस्यादावेव लक्षयेत् ।
अभिमन्त्र्यास्य करयोर्लोहपिण्डं ततो न्यसेत् ॥१०॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ॥११॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ १२ ॥११॥

---

6. नाविलम्बितं C[1,2]v. 7. लोह॰ om. V[3] C[1,2]v. 8. यद्यन्य-चिह्नितकरस्तम॰ C[1,2]; यदि स स्यात्तचिह्नंकरस्तम॰ v. From the C. 9. धारयेत्पिण्डं C[1,2]v. 10. विमृदितव्रीही इति पाठे तु स्पष्टमेव । N.

---

8. यो दिव्यकर्ता हस्तयोः क्वचित्पूर्वकृतेषु चिह्नेषु ततोऽन्यत्र दग्धः... भवति तमशुद्धं विनिर्दिशेत् ।... 10. विमृदिता व्रीहयो येनासौ विमृदितव्रीहिस्तस्य करावादावेव पिप्पलपत्रन्यासात्प्रागेव व्रणकिणतिलकादिस्थानेष्वलक्तरसादिना लक्षयेदङ्कयेत् ।...लक्षयित्वा ततो न्यसेत् ।...पिण्डं वक्ष्यमाणैर्मन्त्रैः प्राड्विवाकः स्वयमभिमन्त्र्य... अस्य करयोर्लोहपिण्डं न्यसेत् ।...मन्त्रानाह ॥

अथोदकम् । १ । पङ्कशैवालदुष्टग्राहमत्स्यजलौका-दिवर्जितेऽम्भसि । २ । तत्रानाभिमग्नस्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितमम्भः प्रविशेत् । ३ । तत्समकालं च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरक्षेपं कुर्यात् । ४ । तं चापरः पुरुषो जवेन शरमानयेत् । ५ ।

तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्तितः ।
अन्यथा त्वविशुद्धः स्यादेकाङ्गस्यापि दर्शने ॥ ६ ॥

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानुषाः ॥ ७ ॥

व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ८ ॥१२॥

---

अथ विषम् । १ । विषाण्यदेयानि सर्वाणि ।२। ऋते हिमाचलोद्भवाच्छाङ्गात् । ३ । तस्य च यवसप्तकं घृतप्लुतमभिशस्ताय दद्यात् । ४ ।

---

XII, 2....दुष्टाः कर्कटादयः । ग्राहाः शिशुमारादयः ।...3...वक्ष्यमाणमन्त्राभ्यां प्राड्विवाकेन ... अभिमन्त्रितम् ... XIII, 3. हिमगिरावपि यत् । शृङ्गोद्भवम् । तद्विना । ... तच्च शृङ्गाकृतिवद्वत्सनाभसंज्ञकम् । ..

विषं वेगक्रमापेतं सुखेन यदि जीर्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत् ॥ ५ ॥
विषत्वाद्विषमत्वाच्च क्रूरं त्वं सर्वदेहिनाम् ।
त्वमेव विष जानीषे न विदुर्यानि मानुषाः ॥ ६ ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ ७ ॥१३॥

---

अथ कोशः । १ । उग्रान्देवान्समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयं पिबेत् । २ । इदं मया न कृतमिति व्याहरन्देवताभिमुखः । ३ ।
यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ॥ ४ ॥
तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये ।
दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥५॥१४॥

---

XIII, 5. वेगक्रमापेतं V⁴. 6. क्रूर $C^{1,2}$v. XIV, 3 and 4 a om V⁴; इति वदन्स्नापितदेवताभिमुखः $V^{1-3}$. वदन् and स्नापित from the C.

---

5. तद्रचितं विषं विषवेगानां सप्तानां...तत्क्रमा रोमाञ्चादयस्तैरपेतं रहितं यदि जीर्यते... XIV, 2. उग्रान्दुर्गादित्यादीन् ... 3. इदमिति... ऋणग्रहणादि कर्म पातकं वा मया न कृतमिति वदन्स्नापितदेवताभिमुखः पिबेत् ।... 5. ... सर्वेष्वपि दिव्येषु शुद्धं पुरुषं नृपो वस्त्रालंकारादिभिः सत्कुर्याद्योऽसौ धार्मिको धर्मनिर्णयकारीति।...

अथ द्वादश पुत्रा भवन्ति। १। स्वे क्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः। २। नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः। ३। पुत्रिकापुत्रस्तृतीयः। ४। यस्तस्याः पुत्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा पुत्रिका। ५। पुत्रिकाविधिनाप्रतिपादितापि भ्रातृविहीना पुत्रिकैव। ६। पौनर्भवश्चतुर्थः। ७। अक्षता भूयः संस्कृता पुनर्भूः। ८। भूयस्त्वसंस्कृतापि परपूर्वा। ९। कानीनः पञ्चमः। १०। पितृगृहेऽसंस्कृतयैवोत्पादितः। ११। स च पाणिग्राहस्य। १२। गृहे च गूढोत्पन्नः षष्ठः। १३। यस्य तल्पजस्तस्यासौ। १४। सहोढः सप्तमः। १५। या गर्भिणी संस्क्रियते तस्याः पुत्रः। १६। स च पाणिग्राहस्य। १७।

---

XV, 3. चोत्पादितः $V^{1-4}$ 5. यस्त्वस्याः $V^{4}$v. 6. पुत्रिकाविधिना प्रतिपादिता पितृभ्रातृविहीना $C^{1,2}$; पु० प्रतिपादितापि पितृभ्रातृविहीना v

---

XV, 3. ... भार्यायां ... पुत्रोत्पत्त्यर्थं गुरुभिर्नियुक्तायां गुर्वनुज्ञातेनैव देवरेण कनिष्ठेन ज्येष्ठेन वा भर्तुर्भ्रात्रा तदभावे सपिण्डेन तस्याप्यभावे सगोत्रेण तस्याप्यभावे समानप्रवरेण तस्याप्यभावे उत्तमवर्णेन ब्राह्मणेन वोत्पादितः।... 9. या तु संस्कारात्प्रागेव परपूर्वा परोपभुक्ता सा यद्यपि भूयो न संस्क्रियते क्रियमाणसंस्कारस्यैव प्रथमत्वात्तथापि पुनर्भूर्भवति पुनर्मिथुनीभवनात्।... स्वैरिण्याः पुनःसंस्कारश्चोपपादितोऽस्माभिः सविस्तरं मिताक्षराटीकायां प्रतीताक्षरायामिति नेहोच्यते ॥

दत्तकश्चाष्टमः । १८ । स च मातापितृभ्यां यस्य दत्तः । १९ । क्रीतश्च नवमः । २० । स च येन क्रीतः । २१ । स्वयमुपगतो दशमः । २२ । स च यस्योपगतः । २३ । अपविद्धस्त्वेकादशः । २४ । पित्रा मात्रा च परित्यक्तः । २५ । स च येन गृहीतः । २६ । यत्र क्वचनोत्पादितश्च द्वादशः । २७ । एतेषां पूर्वः पूर्वः श्रेयान् । २८ । स एव दायहरः । २९ । स चान्यान्बिभृयात् । ३० । अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्यात् । ३१ । पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः । ३२ । रिक्थग्राहिभिस्ते भर्तव्याः । ३३ । तेषां चौरसाः पुत्रा भागहारिणः । ३४ । न तु पतितस्य । ३५ ।पतनीये कर्मणि कृते त्वनन्तरोत्पन्नाः । ३६ । प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः । ३७ । तत्पुत्राः पैतामहेऽप्यर्थे । ३८ । अंशग्राहिभिस्ते भरणीयाः । ३९ । यश्चार्थहरः स पिण्डदायी । ४० । एकोढानामप्येकस्याः पुत्रः सर्वासां पुत्र

25.... उभाभ्यामन्यतराभावेऽवशिष्टेनान्यतरेणैव वा परित्यक्तः ।...
27. उक्तविषयेभ्योऽन्यत्र यत्र क्वचन स्वीयायां परकीयायां वा सवर्णायामसवर्णायां वा ऊढायामनूढायां वा क्षतायामक्षतायां वा इत्यादितः । संविदभावेऽपि बीजिनः सर्वत्राप्यपुत्रत्वे दत्तक्रीतादीनामपि बीजिपुत्रत्वाभिधानाय यत्र क्वचनोत्पादितः साधारण्येनोच्यत इति न विरोधः ।... अथवा यत्र क्वचनेत्यनेनानूढा शूद्रा विवक्षिता तस्यां जातो द्वादशः पुत्र इति व्याख्येयम् ।... अत एव मनुः । ( IX, 178 ).

एव । ४१ । भ्रातॄणामेकजातानां च । ४२ । पुत्रः पितृवित्तालाभेऽपि पिण्डं दद्यात् । ४३ ।

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ४४ ॥
ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ ४५ ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम् ॥ ४६ ॥
पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।
दौहित्रोऽपि ह्यपुत्रं तं संतारयति पौत्रवत् ॥४७॥१५॥

समानवर्णासु पुत्राः सवर्णा भवन्ति । १ । अनुलोमासु मातृसवर्णाः । २ । प्रतिलोमास्वार्यविगर्हिताः । ३ । तत्र वैश्यापुत्रः शूद्रेणायोगवः । ४ । पुल्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम् । ५ । चण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः । ६ । संकरसंकराश्चासंख्येयाः । ७ । रङ्गावतरणमायोगवानाम् । ८ । व्याधता

XVI,5,9.पुल्कस०, पुल्कसानां V[1-4] N.; पुक्कस० V[1] in mg.; पुक्कस०, पुक्कसानां C[1,2] v. See the other Smṛitis. 6. ०सुताश्च V[1-3] C[1,2] N.; शूद्राश्च v; See 13.

XVI, 7. संकरेष्वनुलोमजेषु प्रतिलोमजेषु च वर्णेभ्यः पुनरानुलोम्येन प्रातिलोम्येन च परस्परं ये संकरास्ते असंख्येयाः ।

पुल्कसानाम् । ९ । स्तुतिक्रिया मागधानाम् । १० । वध्यघातित्वं चण्डालानाम् । ११ । स्त्रीरक्षा तज्जीवनं च वैदेहकानाम् । १२ । अश्वसारथ्यं सूतानाम् । १३ । चण्डालानां बहिर्ग्रामनिवसनं मृतचैलधारणमिति विशेषः । १४ । सर्वेषां समानजातिभिर्व्यवहारः । १५ । स्वपितृवित्तानुहरणं च । १६ ।

संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥१७॥
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥१८॥१६॥

---

पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपार्जितेऽर्थे । १ । पैतामहे त्वर्थे पितृपुत्रयोस्तुल्यं स्वामित्वम् । २ ।

---

15. ०विवाहः । $V^{1-4}$; विहाराः । $C^{1,2}$v. See the C. 18. स्त्रीबालाद्यवपत्तौ $V^4$. See M. X, 62.

---

10. स्तुतिक्रिया सदसद्गुणकीर्तनं मागधानां वृत्तिः । मागधानां वणिक्पथमिति (०थ इति) मनुः । (X, 47). 11. वध्यानां चौरादीनाम् ।... 12. स्त्रीणां नर्तक्यादीनां रक्षा पोषणादि तज्जीवनं तदुपार्जितद्रव्यजीवनं च... 14. ... इति प्रतिलोमजानां मध्ये चण्डालादीनां विशेषः ।... 15. ... स्वस्वसमानजातिधर्मैः सह विवाहादिर्व्यवहारः । नोत्तमैः ।... 16. सर्वेषामपि प्रतिलोमजानां स्वस्वपितृद्रव्यांशभागित्वमस्ति ।... 18. ...बाह्यानां प्रतिलोमजानाम्... XVII, 1... यदि पिता कस्यचित्पुत्रस्य ...अधिकं दित्सति तदा स्वेच्छया दद्यात्...

पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः । ३ । अपुत्रधनं पत्न्यभिगामि । ४ । तदभावे दुहितृगामि ।५। तदभावे पितृगामि । ६ । तदभावे मातृगामि ।७। तदभावे भ्रातृगामि । ८ । तदभावे भ्रातृपुत्रगामि । ९ । तदभावे बन्धुगामि । १० । तदभावे सकुल्यगामि ।११। तदभावे सहाध्यायिगामि । १२ । तदभावे ब्राह्मणधनवर्जं राजगामि । १३ । ब्राह्मणार्थो ब्राह्मणानाम् । १४ । वानप्रस्थधनमाचार्यो गृह्णीयात् । १५ । शिष्यो वा । १६ ।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥ १७ ।

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति स्त्रीधनम् । १८ । ब्राह्मा-

XVII, 4. अपुत्रस्य धनं C[1,2]v. 13. ब्राह्मणवर्जं V[4].

3.... विभागानन्तरोत्पन्नस्य भ्रातुः... 10. तेषां भ्रातृपुत्राणामभावे बन्धवः सपिण्डास्त्वेव सगोत्रा असगोत्राश्च ।... तत्रायं क्रमः । पितृसंताने भ्रातृपुत्राभावे भ्रातृपौत्रस्तदभावे पितामहस्तत्पुत्रस्तत्पौत्रश्च ( तत्प्रपौत्रश्च V[1] sec. m. in mg.) तदभावे प्रपितामहस्तत्पुत्रस्तत्पौत्रस्तत्प्रपौत्रश्चेत्येवम्...। पितृसपिण्डाभावे मातृसपिण्डा मातामहमातुलतत्सुताद्या गृह्णीयुः... । तदभावे मातृष्वसृसुततत्सुताद्याः ।... तेषां बान्धवानामभावे सकुल्यः पञ्चमादिसंततिस्तद्गामि । ...सकुल्याभावे आचार्यो गृह्णीयात्तदभावे शिष्यः ।... तदभावे क इत्यत आह ॥ 13...तद्धनं राजा गृह्णीयाद्ब्राह्मणधनं वर्जयित्वा ।... 19...चतुर्भिर्विवाहैरूढायाम्...

दिषु चतुर्षु विवाहेष्वप्रजायामतीतायां तद्भर्त्तुः । १९ । शेषेषु च पिता हरेत् । २० । सर्वेष्वेव प्रसूतायां यद्धनं तद्दुहितृगामि । २१ ।

पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ २२ ॥
अनेकपितृकाणां तु पितृतोंऽशप्रकल्पना ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥ २३ ॥ १७ ॥

---

ब्राह्मणस्य चतुर्षु वर्णेषु चेत्पुत्रा भवेयुस्ते पैतृकं रिक्थं दशधा विभजेयुः । १ । तत्र ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात् । २ । क्षत्रियापुत्रस्त्रीन् । ३ । द्वावंशौ वैश्यापुत्रः । ४ । शूद्रापुत्रस्त्वेकम् ।५। अथ चेच्छूद्रवर्जं ब्राह्मणस्य पुत्रत्रयं भवेत्तदा तद्धनं नवधा विभजेयुः । ६ । वर्णानुक्रमेण चतुस्त्रिद्विभागीकृतानंशानादद्युः । ७ । वैश्यवर्जमष्टधाकृतं चतुरस्त्रीनेकं चादद्युः । ८ । क्षत्रियवर्जं सप्तधाकृतं चतुरो द्वावेकं च । ९ । ब्राह्मणवर्जं षड्धाकृतं

---

21. तद्धनं V[4]. 23. पितृतो भागकल्पना C[1,2].(and Y. II, 120) ; पितृभागप्रकल्पना v. XVIII, 6. ब्राह्मणपुत्रत्रयं v. V[1-3] place 32, 33 before 23.

---

22. गृहपतिना स्वपत्न्यै स्नुषाभ्यो वा विवाहकाले योऽलंकारो दत्तस्ताभि धृतः परिहितो भवेन्न तथैव स्थापितस्तम्...

चीन्द्वावेकं च । १० । क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः । ११ । अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां तदा सप्तधा कृताद्धनाद्ब्राह्मणश्चतुरोंऽशानादद्यात् । १२ । त्रीन्राजन्यः । १३ । अथ ब्राह्मणस्य ब्राह्मणवैश्यौ तदा षड्धा विभक्तस्य चतुरोंऽशान्ब्राह्मणस्त्वादद्यात् । १४ । द्वावंशौ वैश्यः । १५ । अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् । १६ । चतुरोंऽशान्ब्राह्मणस्त्वादद्यात् । १७ । एकं शूद्रः । १८ । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् । १९ । त्रीनंशान्क्षत्रियस्त्वादद्यात् । २० । द्वावंशौ वैश्यः । २१ । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रौ पुत्रौ स्यातां तदा तद्धनं चतुर्धा विभजेयाताम् । २२ । त्रीनंशान्क्षत्रियस्त्वादद्यात् । २३ । एकं शूद्रः । २४ । अथ ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा वैश्यशूद्रौ पुत्रौ स्यातां तदा तद्धनं त्रिधा विभजेयाताम् । २५ । द्वावंशौ वैश्यस्त्वादद्यात् । २६ । एकं शूद्रः । २७ । अथैकपुत्रा ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः सर्वहराः । २८ । क्षत्रियस्य राजन्यवैश्यौ । २९ । वैश्यस्य वैश्यः । ३० । शूद्रः शूद्रस्य । ३१ । द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्धहरः । ३२ ।

अपुत्ररिक्थस्य या गतिः सात्रार्धस्य द्वितीयस्य । ३३ ।
मातरः पुत्रभागानुसारेण भागापहारिण्यः । ३४ ।
अनूढाश्च दुहितरः । ३५ । समानवर्णाः पुत्राः समा-
नंशानादद्युः । ३६ । ज्येष्ठाय श्रेष्ठमुद्धारं दद्युः । ३७ ।
यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः शूद्रापुत्रस्तदा नव-
धा विभक्तस्यार्थस्य ब्राह्मणीपुत्रावष्टौ भागानादद्याता-
मेकं शूद्रापुत्रः । ३८ । अथ शूद्रापुत्रावुभौ स्यातामेको
ब्राह्मणीपुत्रस्तदा षड्धा विभक्तस्यार्थस्य चतुरोंऽशा-
न्ब्राह्मणस्त्वादद्याद्द्वावंशौ शूद्रापुत्रौ । ३९ । अनेन क्र-
मेणान्यत्राप्यंशकल्पना भवति । ४० ।
विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥ ४१ ॥
अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥ ४२ ॥

---

33. सार्धस्य V[1,3,4]. 38. नवधा विभक्तस्यार्थस्य om. C[1,2]v.

---

XVIII, 33. अपुत्रधनं पत्न्यभिगामीत्यादिना (XVII, 4 seq.) येऽपुत्रधनाधिकारिणोऽभिहितास्तेनैव क्रमेणेदमर्धं गृह्णीयुः ।...34. यज्जातीयस्य पुत्रस्य यो भाग उक्तस्तदनुसारेणैव तज्जातीया माताप्यंशं हरेत् । ब्राह्मणी चतुरोंऽशानाहरेत् । क्षत्रिया त्रीन् । वैश्या द्वौ । शूद्रैकमिति ।... 37. उद्धारं विंशांशादिवज्ज्येष्ठाय सर्वापेक्षया कनीयांसो दद्युः ।... 42... यच्च स्वयमीहितं वाञ्छितं सन्मित्रादिभ्यो लब्धं तदकामोऽनिच्छन्भ्रात्रादिभ्यो दातुं नार्हति । यथाह योगीश्वरः (Y. II, 118)...

पैतृकं तु यदा द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥ ४३ ॥
वस्त्रं पत्त्रमलंकारः कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारश्च न विभाज्यं च पुस्तकम् ॥ ४४ ॥१८॥

---

मृतं द्विजं न शूद्रेण निर्हारयेत् ।१। न शूद्रं द्विजेन ।२। पितरं मातरं च पुत्रा निर्हरेयुः ।३। न द्विजं पितरमपि शूद्राः ।४। ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गलोकभाजः ।५। निर्हृत्य च बान्धवं प्रेतं सत्कृत्याप्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनं कुर्युः ।६। प्रेतस्योदकनिर्वपणं कृत्वैकं पिण्डं कुशेषु दद्युः ।७। परिवर्तितवाससश्च निम्बपत्त्राणि विदश्य द्वार्यश्मनि पदन्यासं कृत्वा गृहं प्रविशेयुः ।८।

---

43. अनवाप्य $C^{1,2}$v. XIX, 6. सत्कृत्य प्रदक्षिणेन v.

---

43... यच्च स्वयं विद्याशौर्यादिनार्जितं तदकामः स्वपुत्रैः सह न विभजेत् ।... 44. ... पत्त्रं वाहनं यद्येनारूढं । ऋणादिपत्त्रं वा ।... XIX, 1. ...शूद्रेण सपिण्डेनासपिण्डेन वा न निर्हारयेत् ॥ 5. अनाथं सपिण्डादिरहितम्... 6. ... चितामप्रदक्षिणेनाभिगम्य... 7. पिण्डोदकदानान्तर्यविधानेन प्रथमदिनादिकर्तव्यता बोधिता ।...

अक्षतांश्चाग्नौ क्षिपेयुः । ९ । चतुर्थे दिवसेऽस्थिसंचयनं कुर्युः । १० । तेषां गङ्गाम्भसि प्रक्षेपः । ११ । यावत्संख्यमस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति तावद्वर्षसहस्राणि स्वर्गलोकमधितिष्ठति । १२ । यावदाशौचं तावत्प्रेतस्योदकं पिण्डमेकं च दद्युः । १३ । क्रीतलब्धाशनाश्च भवेयुः । १४ । अमांसाशनाश्च । १५ । स्थण्डिलशायिनः । १६ । पृथक्शायिनश्च । १७ । ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः परिवर्तितवाससो गृहं प्रविशेयुः । १८ । तत्र शान्तिं कृत्वा ब्राह्मणानां च पूजनं कुर्युः । १९ । देवाः परोक्षदेवाः प्रत्यक्षदेवा ब्राह्मणाः । २० । ब्राह्मणैर्लोका धार्यन्ते । २१ ।

ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः ।
ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित् । २२ ।

---

10. चतुर्थेऽह्नि $V^{1-3}$. संचयं $C^{1,2}$v. 12. स्वर्गलोके महीयते v. See the C. 20 प्रत्यक्षा v.

---

12. यस्य पुरुषस्य यत्संख्यकान्यस्थीनि गङ्गातोये तिष्ठन्ति स तावदब्दसहस्राणि स्वर्गलोके वसति ॥ 14. क्रीतमयाचितलब्धं वा... 19. शान्तिसूक्तपाठं कृत्वा... 22. ...ब्राह्मणाभिहितशापानुग्रहादिवाक्यैर्दुष्टनिग्रहशिष्टानुग्रहाभ्यामनुगृहीता जनाश्च भुवीति लोकधारणमुपपन्नम् । वाक्यमात्रस्य कथं फलसाधकतेत्यत आह ॥

यद्ब्राह्मणास्तुष्टतमा वदन्ति
तद्देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः ॥ २३ ॥
दुःखान्वितानां मृतबान्धवानाम्
आश्वासनं कुर्युरदीनसत्त्वाः ।
वाक्यैस्तु यैर्भूमि तवाभिधास्ये
वाक्यान्यहं तानि मनोऽभिरामे ॥ २४ ॥ १९ ॥



यदुत्तरायणं तदहर्देवानाम् । १ । दक्षिणायनं रात्रिः । २ । संवत्सरोऽहोरात्रः । ३ । तत्त्रिंशता मासः । ४ । मासा द्वादश वर्षम् । ५ । द्वादश वर्षशतानि दिव्यानि कलियुगम् । ६ । द्विगुणानि द्वापरम् । ७ । त्रिगुणानि त्रेता । ८ । चतुर्गुणानि कृतयुगम् । ९ । द्वादश वर्षसहस्राणि [ दिव्यानि ] चतुर्युगम् । १० । चतुर्युगानामेकसप्त-

---

XX, 10. वर्षसहस्राणि दिव्यानि V[1–4] C[1,2]; दिव्यानि seems to have crept in from the C. चातुर्युगं V[1–4]v.

---

23. पूजादिना तुष्टतमा विप्रा यस्मै यत्पुत्रपशुधनाद्यस्त्विति वदन्ति तद्देवतास्तथास्त्विति वाक्यैः प्रत्यभिनन्दयन्ति । स्वार्थे णिच् । प्रत्यभिनन्दन्तीत्यर्थः ।... 24. न दीनं सत्त्वं धैर्यं येषां ते धैर्यवन्तः ।... XX. 6. ...तत्र शतद्वयं संध्यासंध्यंशयोर्वर्षसहस्रमेव च युगम् ।

तिर्मन्वन्तरम् । ११ । चतुर्युगसहस्रं च कल्पः । १२ । स च पितामहस्याहः । १३ । तावती चास्य रात्रिः । १४ । एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः । १५ । ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः । १६ । तस्यान्ते महाकल्पः । १७ । तावत्येवास्य निशा । १८ । पौरुषाणामहोरात्राणामतीतानां संख्यैव नास्ति । १९ । न च भविष्याणाम् । २० । अनाद्यन्तत्वात्कालस्य । २१ ।

एवमस्मिन्निरालम्बे काले सततयायिनि ।
न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा ॥ २२ ॥
गङ्गायाः सिकताधारास्तथा वर्षति वासवे ।
शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥ २३ ॥
चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः ।
सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥ २४ ॥

---

21. अनाद्यन्तता $C^{1,2}$v.

---

13. यः कल्प इत्युक्तः स एष पितामहस्य ब्रह्मणोऽहःसंज्ञो भवति। 15. एवंविधेन कल्पद्वयपरिमितेनाहोरात्रेण त्रिंशत्संख्येन मासस्तैर्द्वादशभिर्मासैर्वर्षं तानि शतं वर्षाणि सर्वस्यैव यो यो यदा यदा ब्रह्मा जायते तदा तदा तस्य तस्यायुर्भवति।... 22. ... निरालम्बे निरुपादानके सततयायिनि नित्ये काले भगवति न तद्भूतं पृथिव्याद्यन्यतममप्यस्ति... 23. ... या वा वासवे वर्षति जलधारास्ता अपि लोके गणयितुं शक्यन्ते न त्वतीताः पितामहा ब्रह्माणः ... 24. एकैकस्मिन्कल्पे ब्रह्मदिवसे चतुर्दश देवप्रधाना इन्द्रा मनुष्यप्रधाना मनवश्च विनश्यन्ति ॥

बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च ।
विनष्टानीह कालेन मनुजेष्वथ का कथा ॥ २५ ॥
राजर्षयश्च बहवः सर्वे समुदिता गुणैः ।
देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥ २६ ॥
ये समर्था जगत्यस्मिन्सृष्टिसंहारकारणे ।
तेऽपि कालेन लीयन्ते कालो हि दुरतिक्रमः ॥ २७ ॥
आक्रम्य सर्वः कालेन परलोकं च नीयते ।
कर्मपाशवशो जन्तुस्तत्र का परिदेवना ॥ २८ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
अर्थे दुष्परिहार्येऽस्मिन्नास्ति लोके सहायता ॥ २९ ॥
शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ ३० ॥

---

27. नीयन्ते $V^{1-4}$.

---

25. एकैकस्मिन्कल्पे चतुर्दश चतुर्दशेत्येवं कल्पानामानन्त्यत्वाद्बहूनीन्द्रसहस्राणीत्युक्तस्यैव प्रपञ्चः । तथा दैत्येन्द्राणां हिरण्यकशिपुहिरण्याक्षादीनां नियुतानि लक्षाणि स्वस्वाधिभूतेन कालेन नष्टानि । तत्राल्पतरायुषां मनुजानां कथैव का... । 27. न केवलमतीतकाल एव विशिष्टा नष्टाः किंत्विदानीमप्यस्मिञ्जगति वर्तमानेऽपि लोके सृष्टिसंहारणे उत्पत्तिविनाशविधाने ये समर्थाः सोमसूर्यादयो ग्रहास्तेऽपि··· 28. न केवलं मानुषेष्वेव कालप्रभावमपि तु सर्वोऽपि जन्तुरवधिसमाप्तावाक्रम्य निष्पीड्य परलोकं पञ्चत्वं नीयते ।... 29. ... अस्मिन्नर्थे प्रवृत्तिनिवृत्त्योः सहायता सहचरिता नास्ति । यतोऽयमर्थो दुःखेनाप्यपहरणीयः प्रारब्धकर्मणां भोगैकतावश्यकत्वात् ॥ 30...श्राद्धादिक्रियाः शक्त्यनुसारेण कार्याः ॥

सुकृतं दुष्कृतं चोभौ सहायौ यस्य गच्छतः ।
बान्धवैस्तस्य किं कार्यं शोचद्भिरथवा न वा ॥ ३१ ॥
बान्धवानामशौचे तु स्थितिं प्रेतो न विन्दति ।
अतस्त्वभ्येति तानेव पिण्डतोयप्रदायिनः ॥ ३२ ॥
अर्वाक्सपिण्डीकरणात्प्रेतो भवति यो मृतः ।
प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ॥ ३३ ॥
पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते स्वधासमम् ।
पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥ ३४ ॥
देवत्वे यातनास्थाने तिर्यग्योनौ तथैव च ।
मानुष्ये च तथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥ ३५ ॥
प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे कृते ध्रुवम् ।
तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् ॥ ३६ ॥
एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः ।
नोपकुर्यान्नरः शोचन्प्रेतस्यात्मन एव वा ॥ ३७ ॥

---

34. स्वधामयम् । C[1,2]; समंचकम् v. 37. शोकात् C[1,2].

---

32. ...पिण्डतोयप्रदायिनो बान्धवानेव... 33. वक्ष्यमाणेषु सपिण्डीकरणकालेषु यावत्सपिण्डीकरणं भवति तावन्मृतो जन्तुः प्रेतः क्षुत्तृष्णाजनितदुःखानुभववान्भवति । 34 ...श्राद्धे पार्वणादौ पुत्रादिदत्तमन्नपानादि स्वधया पितृभोग्येनामृतविशेषेण समं तुल्यं भुङ्क्ते ।...37. शोकेन श्राद्धम् अकुर्वन्...प्रतिकूलं कुर्यात्...एतावत्पूर्वोक्तं श्राद्धादि...

दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान् ।
धर्ममेकं सहायार्थं वरयध्वं सदा नराः ॥ ३८ ॥
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् ।
जायावर्जं हि सर्वस्य याम्यः पन्था विरुध्यते ॥ ३९ ॥
धर्म एकोऽनुयात्येनं यत्र क्वचनगामिनम् ।
नन्वसारे नृलोकेऽस्मिन्धर्मं कुरुत माचिरम् ॥ ४० ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥ ४१ ॥
क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ४२ ॥
न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ।
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ ४३ ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ४४ ॥

---

38. आक्रन्दः पृष्ठरक्षकः मृतस्य लोके पश्चात्प्रियानुष्ठानेनोपकर्ता तद्र-हितोऽयं लोको यतः प्रतिदिनं म्रियमाणा एव बान्धवा दृश्यन्ते अतः स्वस्यासहायतां ज्ञात्वा इहामुत्र च सहायार्थं धर्ममेवैकं भो नराः सदा वरयध्वम् ॥ 39. सह मृतानामपि ...क्व साहाय्योपयोगः ... । जायायाः प्रत्येकशरीरत्वेन... व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । तद्वदुद्धृत्य सा नारीत्याद्युपकारत्वश्रवणाच्च तां विनान्यस्य सर्वस्यापि यमलोकमार्गोऽनु-मरणं विरुद्धमेव ।... 42...गृहे चेदं कृतमिदमकृतमित्यादि... अन्यत्र पुत्रदुहित्राद्युपनयनविवाहादौ गतमानसम्... 43... तस्य प्रियः प्राप्ते काले रक्षणीयो द्वेष्यश्चाप्राप्ते काले मारणीयो वा नास्ति ।

नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ४५ ॥
आगामिनमनर्थं हि प्रविधानशतैरपि ।
न निवारयितुं शक्तस्तत्र का परिदेवना ॥ ४६ ॥
यथा धेनुसहस्रेषु वत्सो विदन्ति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारं विन्दते ध्रुवम् ॥ ४७ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि चाप्यथ ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ४८ ॥
देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ ४९ ॥
गृह्णातीह यथा वस्त्रं त्यक्त्वा पूर्वधृतं नरः ।
गृह्णात्येवं नवं देही देहं कर्मनिबन्धनम् ॥ ५० ॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ५१ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सततगः स्थाणुरचलोऽयं सनातनः ॥ ५२ ॥

---

45—47 om. v.

---

46...उपायशतैः... 49...धीरो धीमान् ।... 52... नित्योऽविनाशी । सततगः सर्वकालवर्ती । स्थाणुः स्थिरस्वरूपो रूपान्तरापत्तिशून्यः । अचलः पूर्वदेशापरित्यागी । सनातनोऽनादिः ।...

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हथ ॥ ५३ ॥ २० ॥

---

अथाशौचव्यपगमे सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधान्ब्राह्मणान्यथाशक्त्युदङ्मुखान्गन्धमाल्यवस्त्रालंकारादिभिः पूजितान्भोजयेत् । १ । एकवन्मन्त्रानूहेदेकोद्दिष्टे । २ । उच्छिष्टसंनिधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् । ३ । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात् । ४ । कर्षूसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात् । ५ । सोमाय पितृमते स्वधा नमः । ६ । अग्नये कव्यवाहनाय स्वधा नमः । ७ । यमायाङ्गिरसे स्वधा नमः ।

---

XXI, 1. आचान्त॰ C[1,2]v. 2. ऊहेतै॰ C[1,2]v.

---

XXI, 1...तत्राशौचानन्तरदिनकर्तव्यमाह ।... सुस्नातो मन्त्रवत्कृतस्नानः ।...तत्र संख्याविशेषविधानाय यथाशक्तीति ।... आदिशब्दाद्धूपदीपादिग्रहणम् ।...2. प्रकृतौ पार्वणे बहुवचनान्ता मन्त्रास्ते विकृतावेकोद्दिष्टे एकवचनान्तत्वेनोह्याः । वचनमुपलक्षणं तेन प्रकृतेरप्यूहः । ...3. प्रेतोद्देशेनैव न तत्पित्रादीनां तन्नामगोत्राभ्यामेव दद्यात्ते इति मन्त्रेण निवर्तयेत् । 4... उत्तिष्ठतामित्यक्षय्योदकं तेषु दत्त्वाभिरम्यतामिति तान्विसृज्य... 5. तेष्वग्निष्वेकैकस्मिन्नाहुतित्रयमोदनस्य जुहुयात् । तत्र मन्त्रानाह ॥

।८। स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं कुर्यात्।९। अन्नदधिघृतमधुमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत्। ।१०। एवं मृताहे प्रतिमासं कुर्यात्।११। संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान्देवपूर्वान्भोजयेत् ।१२। अत्राग्नौकरणमावाहनं पाद्यं च कुर्यात्।१३। संसृजतु त्वा पृथिवी समानी व इति च प्रेतपाद्यपात्रे पितृपाद्यपात्रत्रये योजयेत् ।१४। उच्छिष्टसंनिधौ पिण्डचतुष्टयं कुर्यात् ।१५। ब्राह्मणांश्च स्वाचान्तान्दत्तदक्षिणांश्चानुव्रज्य विसर्जयेत्।१६।ततः प्रेतपिण्डं पाद्यपात्रोदकवत्पिण्डत्रये निदध्यात् ।१७। कर्षूत्रयसंनिकर्षेऽप्येवमेव ।१८।

---

10. पूरयित्वैतदिति $C^{1,2}$v.　21. एकं च $C^{1,2}$v.

---

9...प्राग्वत्कुशेषु प्रेतनामगोत्राभ्यामेकैकं पिण्डं दद्यात् ॥ 10...प्रत्येकं कर्षूत्रयं पूरयित्वैतत्ते तत ये च त्वामत्रान्वित्याश्वलायनाद्युक्तं मन्त्रं यथाशाखं जपेत्। अत्र ततशब्दस्थाने प्रेतशब्दस्योहः।... 12...तत्र प्रेतादिभ्यश्चतुर्भ्यश्चत्वारो वैश्वदेविके च द्वावित्येवं षड्ब्राह्मणान्प्रेतस्यैकोद्दिष्टविधिना भोजयेत्।... 13. अत्र सपिण्डीकरणान्तर्गत एकोद्दिष्टे... 14. पाद्यं च पात्रं च पाद्यपात्रे प्रेतपाद्यपात्रे प्रेतपाद्यं प्रेतपाद्योदकं पात्रं प्रेतार्घ्यपात्रोदकं तदुभयं पितृपाद्योदकत्रये पित्रर्घ्यपात्रोदकत्रये च यथाक्रमं मन्त्राभ्यां योजयेत्।... 17. यथा प्रेतपाद्योदकं पितृपाद्योदकत्रयेण प्रेतार्घ्यपात्रोदकं च पित्रर्घ्यपात्रोदकत्रयेण योजितं तथैव प्रेतपिण्डं त्रिधा विभज्य पित्रादिपिण्डत्रये ताभ्यामेव मन्त्राभ्यां योजयेत्। तदुक्तं काठकगृह्ये।...

सपिण्डीकरणं मासिकार्थवद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात्। १९। मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि। २०। संवत्सराभ्यन्तरे यद्यधिमासो भवेत्तदा मासिकार्थे दिनमेकं वर्धयेत्। २१।

सपिण्डीकरणं स्त्रीणां कार्यमेवं तथा भवेत्।
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् ॥ २२ ॥
अर्वाक्सपिण्डीकरणं यस्य संवत्सरात्कृतम्।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने ॥ २३ ॥ २१ ॥

ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम्। १। द्वादशाहं राजन्यस्य। २। पञ्चदशाहं वैश्यस्य। ३। मासं शूद्रस्य। ४। सपिण्डता च पुरुषे सप्तमे विनिवर्तते। ५। आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते। ६। नाशौचे कस्यचिदन्नमश्नीयात्। ७। ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावद-

---

19. मासिकसपिण्डीकरणयोः कालान्तरमप्याह। मासि भवं मासिकं तदर्थः प्रेताप्यायनादिः सोऽस्त्यस्मिन्निति मासिकार्थवत्।... द्वादशाहे द्वादशस्वहःसु कृत्वा त्रयोदशेऽह्नि वा यथोक्तं वा सपिण्डीकरणं कुर्यात्।... द्वादशाह इत्याशौचान्तोपलक्षणम्।... 22... यावज्जीवं प्रतिसंवत्सरं मृताहे श्राद्धमपि वक्ष्यमाणविधिना कुर्यात्।... XXII, 6. होमो वैश्वदेवः... 7. अशौचिनः सवर्णस्यासवर्णस्य वासपिण्डस्यान्नमन्यो नाश्नीयात्। सपिण्डस्य तु न दोषः।

शौचं यावत्तेषाम् । ८ । आशौचापगमे प्रायश्चित्तं कुर्यात् । ९ । सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् । १० । क्षत्रियाशौचे ब्राह्मणस्त्वेतदेवोपोषितः कृत्वा शुध्यति । ११ । वैश्याशौचे राजन्यश्च । १२ । वैश्याशौचे ब्राह्मणस्त्रिरात्रोपोषितश्च । १३ । ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यश्च स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् । १४ । वैश्यश्च ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत् । १५ । शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं चरेत् । १६ । शूद्रश्च द्विजाशौचे स्नानमाचरेत् । १७ । शूद्रः शूद्राशौचे स्नातः पञ्चगव्यं पिबेत् । १८ । पत्नीनां दासानामानुलोम्येन स्वामिनस्तुल्यमाशौचम् । १९ । मृते स्वामिन्यात्मीयम् । २० । हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदाशौचव्यपगमे शुद्धिः । २१ । ब्राह्मणस्य क्षत्रविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः । २२ । क्षत्रि-

---

XXII, 16. C[1,2] read प्राजापत्यव्रतं and make a sloka of the two Sûtras 15, 16. 21, 22. सपिण्डेषु om. C[1,2]v.

---

11... पूर्वेद्युरुपोष्य परेद्युः पूर्वोक्तमेव कृत्वा शुध्यति ॥ 15. वैश्यो विप्राशौचे भुक्त्वा नदीं गत्वाष्टोत्तरशतं गायत्रीर्जपेत् ॥ 20. स्वामिमरणानन्तरं पृथगवस्थितानां वा पत्न्यादीनां स्वस्वजातीयमेवाशौचम् । 21. हीनवर्णानां क्षत्रियादीनामधिकवर्णेषु ब्राह्मणादिषु सपिण्डेषु जातेषु मृतेषु वा यदुत्तमवर्णाशौचं तदपगम एव शुद्धिः ।

यस्य विट्शूद्रयोः षड्रात्रत्रिरात्राभ्याम् । २३ । वैश्यस्य शूद्रेषु षड्रात्रेण ।२४। मासतुल्यैरहोरात्रैर्गर्भस्रावे। २५ । जातमृते मृतजाते वा कुलस्य सद्यः शौचम् । २६ । अदन्तजाते बाले प्रेते सद्य एव । २७ । नास्याग्निसंस्कारो नोदकक्रिया । २८ । दन्तजाते त्वकृतचूडे त्वहोरात्रेण । २९ । कृतचूडे त्वसंस्कृते त्रिरात्रेण । ३० । ततः परं यथोक्तकालेन । ३१ । स्त्रीणां विवाहः संस्कारः । ३२ । संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे । ३३ । तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च । ३४ । जननाशौचमध्ये यद्यपरं जननाशौचं स्यात्तदा पूर्वाशौचव्यपगमे शुद्धिः । ३५ । रात्रिशेषे दिनद्वयेन । ३६ । प्रभाते दिनत्रयेण । ३७ । मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम् । ३८ । श्रुत्वा देशान्तरस्थो जननमरणे आशौचशेषेण शुध्येत् ।३९। व्यतीतेऽशौचे संवत्सरान्त-

39. आशौच० om. $C^{1,2}$v.

25. यावन्तो मासा गर्भस्य तत्समसंख्यैरहोरात्रैर्गर्भस्रावे माता शुध्यति । ... 26. जात एव मृतो जातमृतो नाभिच्छेदात्पूर्वमेव मृत इति यावत् । मृत एव जातो मृतजातः ।... 31. तत उपनयनात्परं स्वस्वकालेन दशाहादिना सर्वे वर्णाः शुद्धेयुः ।... 34. पित्रोस्त्रिरात्रं बन्धूनामेकरात्रं ज्ञेयम् ।... 37. प्रभातो रात्रेश्चरमो यामः ।... शातातपोऽपि । रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिरिति ॥ 39. आशौचमध्य इत्यनुवर्तते ।...

स्त्वेकरात्रेण । ४० । ततः परं स्नानेन । ४१ । आचार्ये मातामहे च व्यतीते त्रिरात्रेण । ४२ ।

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥ ४३ ॥

आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण । ४४ । स्वदेशराजनि च । ४५ । असपिण्डे स्ववेश्मनि मृते च । ४६ । भृग्वग्न्यनाशकाम्बुसंग्रामविद्युन्नृपहतानां नाशौचम् । ४७ । न राज्ञां राजकर्मणि । ४८ । न व्रतिनां व्रते । ४९ । न सत्त्रिणां सत्त्रे । ५० । न कारूणां कारुकर्मणि ।५१। न राजाज्ञाकारिणां तदिच्छया । ५२ । न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः । ५३ । न देशविभ्रमे । ५४ ।

---

43. परपूर्वासु नारीषु $V^4$. 50—52 om. $V^{1-3}$; but 53 is marked ५३. 51. स्वकर्मणि $C^{1,2}$.

---

40. दशाहादावाशौचकालेऽतिक्रान्ते पुनर्वर्षमध्ये ज्ञातिमरणश्रवणे देशान्तरस्थोऽहोरात्रेण शुध्येत् ।... 45. यस्मिन्देशे स्वयमुष्यते स स्वदेशस्तस्य राजनि प्रेते... 46. सपिण्डः पूर्वोक्तस्तद्भिन्नोऽसपिण्डस्तस्मिन्स्ववेश्मनि मृते एकरात्रेण शुद्धिः ॥ 47. भृगुर्गिरिकुटकः ।... 48. ...राजकर्मणि प्रजापालनोपयुक्तहोमदानव्यवहारदर्शनादौ नाशौचम् ।... 50. ... यजमानानां...सत्त्रे गवामयनाान्नसत्त्रादौ नाशौचम् ।... 53. विष्ण्वादिमूर्तिप्रतिष्ठापने ... पूर्वमाशौचात्संभारः प्रारम्भश्चेत् ।... 54. देशोपप्लवे नाशौचं स्पर्शादौ तन्निमित्तशान्त्यादौ च ।...

आपद्यति च कष्टायाम् । ५५ । आत्मत्यागिनः पतिताश्च नाशौचोदकभाजः । ५६ । पतितस्य दासी मृताहे पदापां घटमपवर्जयेत् । ५७ । उद्बन्धनमृतस्य यः पाशं छिन्द्यात्स तप्तकृच्छ्रेण शुध्यति । ५८ । आत्मत्यागिनां संस्कर्ता च । ५९ । तदश्रुपातकारी च । ६० । सर्वस्यैव प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेन । ६१ । अकृतेऽस्थिसंचये सचैलस्नानेन । ६२ । द्विजः शूद्रप्रेतानुगमनं कृत्वा स्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् । ६३ । द्विजप्रेतस्याष्टशतम् । ६४ । शूद्रः प्रेतानुगमनं कृत्वा स्नानमाचरेत् । ६५ । चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः । ६६ । मैथुने दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च । ६७ । श्मश्रुकर्मणि कृते च । ६८ । शवस्पृशं च स्पृष्ट्वा रजस्वलाचाण्डालयूपांश्च ।६९। भक्ष्यवर्जं पञ्चनखशवं तदस्थि सस्नेहं च । ७० । सर्वेष्वेतेषु स्नानेषु वस्त्रं नाप्रक्षालितं बिभृयात् । ७१ । रजस्वला चतुर्थेऽह्नि स्नानाच्छुध्यति ।

57. मृतेऽह्नि $V^{1-4}$ $C^{1,2}$v. 71. पूर्वं वस्त्रं $C^{1,2}$v.

55. कष्टापद्दुर्भिक्षरोगादिस्तत्र प्रतिग्रहदानादौ नाशौचम् ।...
57. पतितस्य मरणदिने दासी अपां घटं पदापवर्जयेत् । इदं त्वं पिबेति ।...
63... अष्टाधिकं सहस्रं गायत्रीर्जपेत् ।... 64... पूर्ववदघमर्षणं जप्त्वाष्टाधिकं शतं गायत्रीर्जपेत् ।... 67... दुःस्वप्ने गर्दभाद्यारोहणे...
69. शववाहकं... चाण्डालं तत्समानधर्मं श्वपचादिकं च ।...

। ७२ । रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा । ७३ । सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुध्यति ।७४। क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषे कृत्वा पञ्चनखास्थ्यस्नेहं स्पृष्ट्वा चाचामेत् । ७५ । चाण्डालम्लेच्छसंभाषणे च । ७६ । नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैश्चोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य शुध्येत् । ७७ । अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन । ७८ । वक्त्रोपहतस्तूपोष्य स्नात्वा पञ्चगव्येन । ७९ । दशनच्छदोपहतश्च । ८० ।

वसा शुक्रमसृङ्मज्जा मूत्रं विट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ८१ ॥
गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजातिभिः ॥ ८२ ॥

---

74. सद्यः om. $C^{1,2}$v Ap. स्नात्वाश्नीयात् $V^{1-3}$ $C^{1,2}$. 75. भुक्त्वा om. $C^{1,2}$. भोजनाध्ययने $C^{1,2}$; भोजनेयः v. 77. सुराभिर्वोपहतो $C^{1,2}$v. 79. is repeated in $V^{1,2,3}$.

---

78. उक्ताङ्गेभ्योऽन्यत्र नाभेरूर्ध्वम्... 81...मज्जा शिरोमध्ये पिण्डित(ऽनः) स्नेहः (Kullûka)।... 82...माध्वी मधुविकारः... यथाह हारीतः... माध्वीकं मधुकं माध्वं मधुना संयुतास्त्रयः।...

माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे ।
मृद्विकारसमाध्वीके मैरेयं नारिकेलजम् ॥ ८३ ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः ॥ ८४ ॥
गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ ८५ ॥
आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ८६ ॥
आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति ॥ ८७ ॥
ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धिकर्तॄणि देहिनाम् ॥ ८८ ॥
सर्वेषामेव शौचानामन्नशौचं परं स्मृतम् ।
योऽन्ने शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः॥८९॥

---

87. त्रिरात्रेण विशुध्यति $C^{1,2}$v. See M. v, 88.

---

83. माधूकं मधूकपुष्पोद्भवम् ।...टङ्कः कपित्थविशेषः...माध्वीकं मधूद्भवं माध्वीव्यतिरिक्तम् । मैरेयं धातृपुष्पजं गुडधान्याम्बुसहितमिति शब्दार्णवे वाचस्पतिः ।... 84...स्पर्शः पानोपलक्षणः ।... 85... प्रेताहारैः प्रेतसपिण्डैः... 86... व्रती ब्रह्मचारी व्रतेन ब्रह्मचर्येण न वियुज्यते न भ्रश्यति ॥ 87... आदिष्टी ब्रह्मचारी प्रक्रान्तप्रायश्चित्त इत्यन्ये ।... 88. ज्ञानमाध्यात्मिकं बुद्धेः शुद्धिहेतुः ।... आहारः पञ्चगव्यादीनाम् ।...कर्म संध्यादि अहोरात्रकृतपापस्य ।... 89...योऽन्ने शुचिः शुच्यन्नादः स शुचिः ।...अर्थशौचमिति पाठे ( See M. v, 106 ) ऽप्याहारशुद्ध्यर्थमेवार्थशौचापेक्षेति ।...

क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ ९० ॥
मृत्तोयैः शोध्यते शोध्यं नदी वेगेन शुध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमाः ॥ ९१ ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ ९२ ॥
एष शौचस्य ते प्रोक्तः शारीरस्य विनिर्णयः ।
नानाविधानां द्रव्याणां शुद्धेः शृणु विनिर्णयम् ॥९३॥२२॥

---

शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम् । १ । अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत् । २ । मणिमयमश्ममयमब्जं च सप्तरात्रं महीनिखनेन । ३ । शृङ्गदन्तास्थिमयं तक्षणेन । ४ । दारवं

---

XXIII, 4. ०दंष्ट्रा० C[1,2]v.

---

90. अकार्यं निषिद्धं तत्कारिणः ।... 91. शोध्यममेध्यादिलिप्तमङ्गम् । ...द्विजोत्तमा ब्राह्मणाः ।... 92. गात्राणि शरीराणि लिप्तान्यद्भिः स्नानैः शुध्यन्ति । मनः सदसत्संकल्पात्मकमसत्संकल्पादशुद्धं सत्येन सत्संकल्पेन शुध्यति ।... विद्यातपोभ्यां ... शुद्धिः शरीराभिमानजन्यदुरितनिवृत्तिः । बुद्धिः संशयविपर्ययात्मिका ज्ञानेन प्रमारूपेण... XXIII. 2. लोहानि सुवर्णरजतताम्रायस्त्रपुरङ्गसीसकानि सप्तविधा धातवः सर्वशब्दात्तद्विकाराः पित्तलादयश्च तन्मयं भाण्डम्... 3... अब्जं शङ्खशुक्त्यादि... 4. शृङ्गं खड्गादीनां दन्तो गजादीनामस्थि कूर्मादीनाम्...

मृन्मयं च जह्यात् । ५ । अत्यन्तोपहतस्य वस्त्रस्य यत्प्रक्षालितं सद्विरज्यते तच्छिन्द्यात् । ६ । सौवर्णराजताब्जमणिमयानां निर्लेपानामद्भिः शुद्धिः । ७ । अश्ममयानां चमसानां ग्रहाणां च । ८ । चरुस्रुक्स्रुवाणामुष्णेनाम्भसा । ९ । यज्ञकर्मणि यज्ञपात्राणां पाणिना संमार्जनेन । १० । स्फ्यशूर्पशकटमुसलोलूखलानां प्रोक्षणेन । ११ । शयनयानासनानां च । १२ । बहूनां च । १३ । धान्याजिनरज्जुतान्तववैदलसूत्रकार्पासवाससां च । १४ । शाकमूलफलपुष्पाणां च । १५ । तृणकाष्ठशुष्कपलाशानां च । १६ । एतेषां प्रक्षालनेन । १७ । अल्पानां च । १८ । ऊषैः कौशेयाविकयोः । १९ । अरिष्टकैः कुतपानाम् । २० । श्रीफलैरंशुपट्टानाम् । २१ । गौर-

6. सद् om. C[1,2]v.

7. अल्पोपघातशुद्धिमाह ।... निर्लेपानामुच्छिष्टादिमात्रस्पर्शे... 8... तेषां निर्लेपानामद्भिरेव शुद्धिः ।... 9. एतेषां चर्वादिलेपरहितानाम्... 10... कुशैर्दशापवित्रेण च... संमार्जनेन ।... 12. स्पर्शशुद्धिमाह ।... एषां चाण्डालादिस्पर्शेऽपि प्रोक्षणेनैव शुद्धिः ॥ 14... वैदलं वेणुविदलकृतं व्यजनादि ।... वासो नवमचिरयन्त्रनिर्मुक्तं क्षालनासहं कौसुम्भादिरक्तं च ।... एतेषां बहूनामपि चाण्डालादिस्पर्शे प्रोक्षणेन शुद्धिः ।... 16... शुष्कं गोमयपिण्डः । पलाशं पर्णं मधूकपलाशादेः । एतेषां चाण्डालादिस्पर्शेऽपि... 17. एतेषां शयनादीनां पलाशान्तानां विष्ठादिलिप्तानां प्रकृष्टेन लेपापनोदकेन द्रव्याविनाशेन च क्षालनेन शुद्धिः ।... 18. येषां धान्यवासःप्रभृतीनां बहूनां स्पर्शे प्रोक्षणमुक्तं तेषामेवाल्पानां तत्रैव क्षालनेन शुद्धिः । नेदं लेपशुद्धौ पूर्वसूत्रेणैव विधानात् ।... 21. अंशुपट्टाः वल्कलतन्तुनिर्मिताः...

सर्षपैः क्षौमाणाम् । २२ । शृङ्गास्थिदन्तमयानां च । २३ । पद्माक्षैर्मृगलोमिकानाम् । २४ । ताम्ररीतित्रपुसीसम-यानामम्लोदकेन । २५ । भस्मना कांस्यलोहयोः । २६ । तक्षणेन दारवाणाम् । २७ । गोबालैः फलसंभवानाम् । । २८ । प्रोक्षणेन संहतानाम् । २९ । उत्पवनेन द्रवा-णाम् । ३० । गुडादीनामिक्षुविकाराणां प्रभूतानां गृह-निहितानां वार्यग्निदानेन । ३१ । सर्वलवणानां च । ३२ । पुनःपाकेन मृन्मयानाम् । ३३ । द्रव्यवत्कृतशौचानां देवतार्चानां भूयःप्रतिष्ठापनेन । ३४ । असिद्धस्यान्नस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षा-लने कुर्यात् । ३५ । द्रोणाभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति । ३६ । तस्योपहतमात्रमपास्य गायत्र्याभिम-

---

35. यावन्मात्रम् C[1,2].  36. द्रोणध्यधिकं V[1,2]; द्रोणाद्यधिकं C[1,2].

---

24. मृगलोमिकानि मृगलोमोद्भवानि राङ्कवादीनि ।... 28. फलानि नारिकेलालाबुबिल्वादीनि तत्संभवानां पात्राणां गोबालैर्गोपुच्छकेशैर्घर्षणेन शुद्धिः ।... 30. कीटाद्युपहतौ शुद्धिमाह ।... द्रवाणां घृततैलदुग्धादीनाम् ।... 31... प्रभूतानां द्रोणाधिकानाम् ...वारिदानं प्रोक्षणं तत्पूर्वकमग्निदानं पर्यग्निकरणम् ।... 32. सर्वेषां शाम्भलसामुद्रसैन्धवसौवर्चलादीनां लवणानां कीटाद्युपहतौ... 33. पुनर्लेपशुद्धिमाह ।... 34. देवतार्चा देवप्रतिमा-स्तासाममेध्यादिलेपे यद्द्रव्यं तत्प्रकृतिस्तत्तच्छुद्धिविहितैर्द्रव्यैस्तत्तद्रीत्या कृत-शुद्धीनां पुनःप्राणप्रतिष्ठया शुद्धिः पूज्यत्वम् । ...सुवर्णादिधातुप्रकृतिकायाः सुवर्णवदेव शुद्धिः ।... 36... श्वकाकाद्युपहतमन्नं न दुष्यति न त्यज्यते ।...द्रोणवचनान्न्यूनस्य त्यागः ।...

न्त्रितं सुवर्णाम्भः प्रक्षिपेत्। बस्तस्य प्रदर्शयदग्नेश्च ।३७।
पक्षिजग्धं गवा घ्रातमवधूतमवक्षुतम्।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ ३८ ॥
यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः।
तावन्मृद्वारि देयं स्यात्सर्वासु द्रव्यशुद्धिषु ॥ ३९ ॥
अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः।
पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ ४० ॥
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥ ४१ ॥
प्राणिनामथ सर्वेषां मृद्भिरद्भिश्च कारयेत्।
अत्यन्तोपहतानां च शौचं नित्यमतन्द्रितः ॥ ४२ ॥
भूमिष्ठमुदकं पुण्यं वैतृष्ण्यं यत्र गोर्भवेत्।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥ ४३ ॥
मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा ।
अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण शोधयेत् ॥ ४४ ॥

---

37. बस्तस्य च प्रदर्शयेदग्नेः। C[1,2]. 38. मृदः क्षेपेण C[1,2]v. 44. om. C[1,2]v.

---

37... हेमाम्भः प्रक्षिपेत्...अजोऽश्वोपलक्षणम् ( See ४० ) ।... 38. पक्षिणः स्पृश्याः... भक्ष्याश्च...केशैर्मानुषैः... 42... प्राणिनां मनुष्याणाम्... कारयेदुपदिशेदाचार्यः ॥ 43. अमेध्येन केशादिना... अव्याप्तमत्यन्तसंपर्करहितम्... यत्र गोरेकस्या वैतृष्ण्यं भवेदवशिष्येच्च तत्।... शिलागतं पर्वतादिशिरोभवम्।... 44. मृताः शीर्णाः पञ्चनखा मनुष्यादयोऽभक्ष्या यस्मिन्।...शेषमपां वस्त्रेण शोधयेदपनयेत्।...

वह्निप्रज्वालनं कुर्यात्कूपे पक्केष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥ ४५ ॥
जलाशयेष्वथाल्पेषु स्थावरेषु वसुंधरे ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥ ४६ ॥
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ४७ ॥
नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्राह्मणान्तरितं भैक्षमाकराः सर्वं एव च ॥ ४८ ॥
नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ ४९ ॥
श्वभिर्हतस्य यन्मांसं शुचि तत्परिकीर्तितम् ।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः ॥ ५० ॥

---

45... इष्टका पाषाणोपलक्षणम् । शरादिबद्धनिरासाय ।... 46...

अल्पेष्वथान्येषु स्थावरेषु वाप्यादिषु जलाशयेषु... । स्थावरग्रहणादलिञ्जरादिनिवृत्तिः । महत्स्वाह न दूषणमिति दोषाभावः । तत्तीर्थपरिहारेण ।... 47...मनस्तुष्ट्यभावे शुद्धमेतदस्त्विति ब्राह्मणानां वाचा शुध्यति ।... 48. कारूणां सूपकारादीनाम्...। यच्चापणे प्रसारितं विक्रेयं पण्यं तदनेकक्रेतृकरकलितमपि शुचि ।...ब्राह्मणेन दापितं क्षत्रियादिभैक्षमपि... शुचि शूद्रान्नं विना ।...गुडलवणाद्युत्पत्तिस्थानानि... सुराकरातिरिक्तानि ।... 49. स्त्रीणां स्वीयानामास्यं सर्वाङ्गोपलक्षणं चुम्बनालिङ्गनादौ शुचि । काकादिपक्षिणां चञ्चूपघातपतितं फलं शुचि ( Kullûka ) ।... वत्सो वत्सतरी बालो वा ।... 50...क्रव्याद्भिर्व्याघ्रश्रृगालश्येनादिभिश्चाण्डालाद्यैः । चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवश्चैव सप्तैते त्वन्त्यजाः स्मृता ॥ इत्युक्तैर्दस्युभिर्व्याधैश्च हतस्य मांसं घातस्थानातिरिक्तं शुचीति ॥

ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि निर्दिशेत् ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥ ५१ ॥
मक्षिका विप्रुषश्छाया गौर्गजाश्वमरीचयः ।
रजो भूर्वायुरग्निश्च मार्जारश्च सदा शुचिः ॥ ५२ ॥
नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ।
न श्मश्रूणि गतान्यास्यं न दन्तान्तरवेष्टितम् ॥ ५३ ॥
स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥ ५४ ॥
उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ ५५ ॥
मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम् ।
संमार्जनेनाञ्जनेन सेकेनोल्लेखनेन च ॥ ५६ ॥
दाहेन च भुवः शुद्धिर्वासेनाप्यथवा गवाम् ।
गावः पवित्रं मङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ॥ ५७ ॥
गावो वितन्वते यज्ञं गावः सर्वाघसूदनाः ।
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ॥ ५८ ॥

---

53. न यान्ति याः $V^{1-4}$ $C^{1,4}$ ; न यन्ति याः v. See M. v, 141.

---

55. ऊर्ध्वमधो वा उच्छिष्टेन कथंचन प्रमादेन संस्पृष्टः ।... हस्तशब्दः स्कन्धाद्यङ्गपरः... 56...पुस्तकं ताडीपत्त्रशरशणादिनिर्मितम् । 57...गवामेकरात्रं वासोऽवस्थानम् । अथवेति चछागग्रहणम् ।... 58. गावो यज्ञं ज्योतिष्टोमादि हविःसंपादनेन संपादयन्ति ।

षडङ्गमेतत्परमं मङ्गल्यं सर्वदा गवाम् ।
शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनम् ॥ ५९ ॥
गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ।
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ॥ ६० ॥

गवां हि तीर्थे वसतीह गङ्गा
पुष्टिस्तथासां रजसि प्रवृत्ता ।
लक्ष्मीः करीषे प्रणतौ च धर्म-
स्तासां प्रणामं सततं च कुर्यात् ॥ ६१ ॥ २३ ॥

---

अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्या भवन्ति । १ । तिस्रः क्षत्रियस्य । २ । द्वे वैश्यस्य । ३ । एका शूद्रस्य । ४ । तासां सवर्णावेदने पाणिर्ग्राह्यः । ५ । असवर्णावेदने शरः क्षत्रियकन्यया । ६ । प्रतोदो वैश्यकन्यया । ७ । वसनदशान्तः शूद्रकन्यया । ८ । न सगोत्रां न समानार्षप्रवरां भार्यां विन्देत । ९ । मातृ-

---

61. तथा सा $C^{1,2}$ तथा v. प्रवृद्धा $V^4$ $C^{1,2}$v. XXIV, 9. विन्देता $V^{1-3}$; विन्देत् $C^{1,2}$v.

---

59... गोशृङ्गोदकेन स्नानं मार्जनं च पुण्यं पुण्यजननम् ।... 61. तीर्थे गोमूत्रे...रजसि स्तरोद्धृते... XXIV, 9. गोत्रमगस्त्याष्टमसप्तर्ष्यपत्यं तत्समानमेकवंशप्रवर्तकं स्वस्य यस्याश्च सा सगोत्रा ।... न समानार्षेति भृगोरङ्गिरसश्च यद्वंशकरमपत्यं जमदग्निगौतमभरद्वाजव्यतिरिक्तमार्ष्टिषेण-मुद्गलादि तदार्षं समानमार्षमुक्तरीत्या यस्याः सा समानार्षा । न त्वेवं गोत्रार्षभेदेऽपि प्रवरैक्ये विवाहः स्यादित्यत आह ।... प्रवरास्तत्तद्वंशेषु मन्त्रकृतो मन्त्रदृशो वा ऋषयः ।... 10... पृथगयं निषेधः...

तस्त्वा पञ्चमात्पुरुषात्पितृतश्चा सप्तमात् । १० । नाकुलीनाम् । ११ । न च व्याधिताम् । १२ । नाधिकाङ्गीम् । १३ । न हीनाङ्गीम् । १४ । नातिकपिलाम् । १५ । न वाचाटाम् । १६ । अथाष्टौ विवाहा भवन्ति । १७ । ब्राह्मो दैव आर्षः प्राजापत्यो गान्धर्व आसुरो राक्षसः पैशाचश्चेति । १८ । आहूय गुणवते कन्यादानं ब्राह्मः । १९ । यज्ञस्थऋत्विजे दैवः । २० । गोमिथुनग्रहणेनार्षः । २१ । प्रार्थितप्रदानेन प्राजापत्यः । २२ । द्वयोः सकामयोर्मातापितृरहितो योगो गान्धर्वः । २३ । क्रयेणासुरः । २४ । युद्धहरणेन राक्षसः । २५ । सुप्तप्रमत्ताभिगमनात्पैशाचः । २६ । एतेष्वाद्याश्चत्वारो धर्म्याः । २७ । गान्धर्वोऽपि राजन्यानाम् । २८ । ब्राह्मीपुत्रः पुरुषानेकविंशतिं पुनीते । २९ । दैवीपुत्रश्चतुर्दश । ३० । आर्षीपुत्रश्च सप्त । ३१ । प्राजापत्यश्चतुरः । ३२ ।



32. प्राजापत्यीपुत्र० V.

11. कर्षकराजसेवकादीनां कुलमकुलम्... 13. अधिकमङ्गमङ्गुल्यादिकं यस्यास्तां न ॥ 23. द्वयोः कन्यावरयोः सकामयोरन्योन्यानुरक्तयोर्मातापितृभ्यां रहितोऽननुज्ञातो योगः... 26... प्रमत्ता मदातिशयेन नष्टचेतना तस्या अभिगमनं मैथुनं तस्मात्पैशाचः । सु० इति मनुस्मरणात् ( III, 34 ) असंविज्ञातोपसंगमनात्पैशाच इति गौतमस्मरणाच्च ( IV, 13 ) ।... 29. ब्राह्मोढापुत्रो दशावरान्दश परान्दातारं चैकविंशं पुनाति वक्ष्यमाणलोकहरान्करोति ।... 32. प्राजापत्ये भवः प्राजापत्यः...

ब्राह्मेण विवाहेन कन्यां ददद्ब्रह्मलोकं गमयति । ३३ । दैवेन स्वर्गम् । ३४ । आर्षेण वैष्णवम् । ३५ । प्राजापत्येन देवलोकम् । ३६ । गान्धर्वेण गन्धर्वलोकं गच्छति । ३७ । पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः । ३८ । पूर्वाभावे प्रकृतिस्थः परः पर इति । ३९ ।

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयं वरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥ ४० ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥४१॥२४॥

---

अथ स्त्रीणां धर्माः । १ । भर्तुः समानव्रतचारित्वम् । २ । श्वश्रूश्वशुरगुरुदेवतातिथिपूजनम् । ३ । सुसंस्कृ-

---

33—37 om. y. 35 om. $C^{1,2}$. 39. परः परः । $C^{1,2}$. 41. विदुष्यति all. XXV, 3. ०देवपादवन्दनादिनातिथि० $V^{1,3}$. पादवन्दनादिना from the C.

---

33...ब्रह्मलोकं गमयति स्वयं च गच्छति... 37. गान्धर्वेण कन्यां ददद्गन्धर्वलोकं स्वयमेव गच्छति ।... 41... सा वृषली तद्भर्तुः पातकं राजदण्डो वा नास्ति ।... XXV, 2. भर्तुर्व्रतेन भर्तृसंकल्पेन समानव्रतचारिणी समानसंकल्पा भवेत् । भर्तृसंकल्पानुसरणशीला स्यादित्यर्थः ।... 3... गुरुर्ज्येष्ठादिः ।.........तेषां पूजां पादवन्दनादिना कुर्यात् ।...

तोपस्करता । ४ । अमुक्तहस्तता । ५ । सुगुप्तभाण्डता । ६ । मूलक्रियास्वनभिरतिः । ७ । मङ्गलाचारतत्परता । ८ । भर्तरि प्रवसितेऽप्रतिकर्मक्रिया । ९ । परगृहेष्वनभिगमनम् । १० । द्वारदेशगवाक्षेष्वनवस्थानम् । ११ । सर्वकर्मस्वस्वतन्त्रता । १२ । बाल्ययौवनवार्धक्येष्वपि पितृभर्तृपुत्राधीनता । १३ । मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा । १४ ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥ १५ ॥
पत्यौ जीवति या योषिदुपवासव्रतं चरेत् ।
आयुः सा हरते भर्तुर्नरकं चैव गच्छति ॥ १६ ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ १७ ॥ २५ ॥

---

सवर्णासु बहुभार्यासु विद्यमानासु ज्येष्ठया सह धर्म-

15.उपोषणम् C[1,2]v. See M. v, 155.

4... उपस्कराः शूर्पादयः ।... 6...भाण्डानि गृहोपकरणानि मुसलोलूखलादीनि ।... 7. मूलक्रिया वशीकरणादिकार्मणाणि ।... 9. प्रतिकर्मालंकरणं क्रिया क्रीडादिश्च... 10. भर्तरि प्रवसिते परेषां पितृश्वशुरभ्रातृमातुलादिव्यतिरिक्तानां गृहेष्वनभिरुच्यागमनाभावः ।... 11. द्वारदेशो द्वारचत्वरः ।... 16. या...स्वातंत्र्येणोपवासश्च व्रतं च तयोः समाहारस्तं कुर्यात् ।... 17... यथा ते नैष्ठिकब्रह्मचारिणः ।...

कार्यं कुर्यात् । १ । मिश्रासु च कनिष्ठयापि समानवर्णया । २ । समानवर्णाया अभावे त्वनन्तरयैवापदि च । ३ । न त्वेव द्विजः शूद्रया । ४ ।

द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत्कचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥ ५ ॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥ ६ ॥
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ७ ॥ २६ ॥

---

गर्भस्य स्पष्टताज्ञाने निषेककर्म । १ । स्पन्दनात्पुरा पुंसवनम् । २ । षष्ठेऽष्टमे सीमन्तोन्नयनम् । ३ । जाते च दारके जातकर्म । ४ । आशौचव्यपगमे नामधेयम् ।

---

XXVI, 3. समानवर्णाभावे $C^{1,2}$. च om $V^{1-4}$v. See the C. 7. नादन्ति $C^{1,2}$v. See M. III, 18. XXVII, 3. ऽष्टमे वा $C^{1,2}$. वा from the C. $V^{1-3}$ place 5—12 between 20 and 21.

---

XXVI. 3. सवर्णाभावे आपदि च सवर्णाप्रतीक्षणे प्रधानबाधप्रसङ्गे चानन्तरैव विप्रस्य क्षत्रियैव क्षत्रियस्य वैश्यैव नैकान्तरा द्व्यन्तरा च ॥ 4. विप्रस्यैकान्तराभ्यनुज्ञायायाह ।... 7... पितृदेवा बहुवचनादतिथयश्च... XXVII, 1. गर्भो ऋतुः... ।... तस्य स्पष्टतां प्रादुर्भावं ज्ञात्वा । निषेको गर्भादानाख्यं कर्म कार्यम् ।... इदं च क्षेत्रसंस्कारत्वात्सकृत्कार्यम् । अथ ऋतुमत्याः प्राजापत्यमृतौ प्रथम इति परिशिष्टात् ।... 3... षष्ठेऽष्टमे वा मासि... यथाकुलधर्मं विकल्पः ।...

। ५ । माङ्गल्यं ब्राह्मणस्य । ६ । बलवत्क्षत्रियस्य । ७ । धनोपेतं वैश्यस्य । ८ । जुगुप्सितं शूद्रस्य । ९ । चतुर्थे मास्यादित्यदर्शनम् । १० । षष्ठेऽन्नप्राशनम् । ११ । तृतीयेऽब्दे चूडाकरणम् । १२ । एता एव क्रियाः स्त्रीणाममन्त्रकाः । १३ । तासां समन्त्रको विवाहः ।१४। गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनम् । १५ । गर्भैकादशे राज्ञः । १६ । गर्भद्वादशे विशः । १७ । तेषां मुञ्जज्या-बल्बजमयो मौञ्ज्यः । १८ । कार्पासशणाविकान्युपवीतानि वासांसि च । १९ । मार्गवैयाघ्रबास्तानि चर्माणि । २० । पालाशखादिरौडुम्बरा दण्डाः । २१ । केशान्त-ललाटनासादेशतुल्याः । २२ । सर्व एव वा । २३ । अकुटिलाः सत्वचश्च । २४ । भवदाद्यं भवन्मध्यं भवदन्तं च भैक्षचरणम् । २५ ।

आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ २६ ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।

---

24 om. C[1,2]. 25. तदन्तं च V[4].

---

10... जन्मतश्चतुर्थे मासि... 13... एता एव जातकर्मादिकाः क्रियाः स्त्रीणां कन्यकानाम्... 15... गर्भाष्टमं जन्माष्टमोपलक्षणम् ।... 23. सर्वेषां सर्व एव वा दण्डा भवन्ति ।... 25. आदिमध्यावसानेषु भवच्छब्दो भैक्षचरणे क्रमेण योज्यः ॥

सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ २७ ॥
यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ २८ ॥
मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥२९॥२७॥

---

अथ ब्रह्मचारिणां गुरुकुलवासः । १ । संध्याद्वयोपासनम् । २ । पूर्वां संध्यां जपेत्तिष्ठन्पश्चिमामासीनः । ३ । कालद्वयमभिषेकाग्निकर्मकरणम् । ४ । अप्सु दण्डवन्मज्जनम् । ५ । आहूताध्ययनम् । ६ । गुरोः प्रियहिताचरणम् । ७ । मेखलादण्डाजिनोपवीतधारणम् । ८ । गुरुकुलवर्जं गुणवत्सु भैक्षचरणम् । ९ । गुर्वनुज्ञातं भैक्षाभ्यवहरणम् । १० । श्राद्धकृतलवणशुक्तपर्युषितनृत्यगीतस्त्रीमधुमांसाञ्जनोच्छिष्टप्राणिहिंसा—

---

28. यस्याविहितं $V^1$; यस्यावेहितं $V^{2,3}$. XXVIII, 1. ब्रह्मचारिणो v. गुरुकुले $C^{1,2}$. 11. ॰शुक्त॰ $V^{1-3}$.

---

27...व्रात्यसंज्ञा भवन्ति।... 28. यानि ब्राह्मणादीनां चर्मयज्ञोपवीतमेखलादण्डवस्त्राण्युपनयनेऽभिहितानि तान्येव तेषां व्रतेषु महानाम्न्यादिषु भवन्ति।... XXVIII, 4. कालद्वयं सायं प्रातश्चाभितः सेकोऽभिषेकः परिसमूहनपर्युक्षणेन स्नानं तत्पूर्वकमग्नौकर्म समित्प्रक्षेपस्तत्करणम् ।... 5... दण्डवत्स्नानीयमन्त्रवर्जम्... 9. गुरोः कुलं स्वस्य च ज्ञातिबन्धुकुलानि वर्जयित्वा... 10...तच्च सायंप्रातः । सायंप्रातर्भुञ्जीतेति गौतमीयात् ( Gaut. IX, 59 ) ।...

श्लीलपरिवर्जनम् । ११ । अधःशय्या । १२ । गुरोः पूर्वोत्थानं चरमं संवेशनम् । १३ । कृतसंध्योपासनश्च गुर्वभिवादनं कुर्यात् । १४ । तस्य च व्यत्यस्तकरः पादावुपस्पृशेत् । १५ । दक्षिणं दक्षिणेनेतरमितरेण । १६ । स्वं च नामास्याभिवादनान्ते भोःशब्दान्तं निवेदयेत् । १७ । तिष्ठन्नासीनः शयानो भुञ्जानः पराङ्मुखश्च नास्याभिभाषणं कुर्यात् । १८ ।

आसीनस्य स्थितः कुर्यादभिगच्छंस्तु गच्छतः ।
आगच्छतः प्रत्युद्गम्य पश्चाद्धावंस्तु धावतः ॥ १९ ॥

पराङ्मुखस्याभिमुखः । २० । दूरस्थस्यान्तिकमुपेत्य । २१ । शयानस्य प्रणस्य । २२ । तस्य च चक्षुर्विषये न यथेष्टासनः स्यात् । २३ । न चास्य केवलं नाम ब्रूयात् ।२४। गतिचेष्टाभाषिताद्यं नास्यानुकुर्यात् ।२५। यत्रास्य

---

19. आसीनस्योपस्थितः कुर्यात्तिष्ठतोऽभिगच्छन्नागच्छतः प्रत्युद्गम्य पश्चाद्धावन्धावतः । $C^{1,2}$; आसीनस्य स्थितः कुर्यात् । तिष्ठतस्त्वभिगच्छतः प्रत्युद्गम्य पश्चाद्धावतः प्रधावतः । v. 26. ०परिवादौ $V^{1-3}$.

---

11...कृतलवणं कृत्रिमं लवणम् । शुक्तं निष्ठुरभाषणम् । शुक्ता वाच इति गौतमीयात् ( II, 19 )। न तु कालेनाम्लीभूतं पर्युषितनिषेधेन तन्निषेधात् ।... उच्छिष्टमगुरोः ।... 17. अभिवादय इति शब्दान्ते भो इति शब्दान्ते यस्य तादृशं स्वं च नाम निवेदयेत् ।... 23... यथेष्टमवसक्थिकादिबन्धेनासनं यस्येति स तथोक्तो न स्यात् ।... 24. अस्य गुरोः केवलं श्रीशब्दादिशून्यं नाम न ब्रूयात् । समक्षं परोक्षं वा ।...

निन्दापरीवादौ स्यातां न तत्र तिष्ठेत् । २६ । नास्यै-
कासनो भवेत् । २७ । ऋते शिलाफलकनौयानेभ्यः
। २८ । गुरोर्गुरौ संनिहिते गुरुवद्वर्तेत । २९ । अनि-
र्दिष्टश्च गुरुणा स्वान्गुरून्नाभिवादयेत् । ३० । बाले
समानवयसि वाध्यापके गुरुपुत्रे गुरुवद्वर्तेत ।३१। नास्य
पादौ प्रक्षालयेत् । ३२ । नोच्छिष्टमश्नीयात् । ३३ ।
एवं वेदं वेदौ वेदान्वा स्वीकुर्यात् । ३४ । ततो वेदा-
ङ्गानि । ३५ । यस्त्वनधीतवेदोऽन्यत्र श्रमं कुर्यादसौ
ससंतानः शूद्रत्वमेति । ३६ । मातुरग्रे विजननं द्वितीयं
मौञ्जिबन्धनम् । ३७ । तत्रास्य माता सावित्री भवति
पिता त्वाचार्यः । ३८ । एतेनैव तेषां द्विजत्वम् । ३९ ।
प्राङ्मौञ्जीबन्धनाद्द्विजः शूद्रसमो भवति । ४० । ब्रह्म-
चारिणा मुण्डेन जटिलेन वा भाव्यम् । ४१ । वेदस्वी-
करणादूर्ध्वं गुर्वनुज्ञातस्तस्मै वरं दत्त्वा स्नायात् । ४२ ।
ततो गुरुकुल एव वा जन्मनः शेषं नयेत् । ४३ । तत्रा-

---

37. मौञ्जि॰ all. 43. वा om. C[1,2].

---

26. निन्दा असद्दोषख्यापनम् । परीवादो विद्यमानदोषोद्घाटनम् ।... 28. शिलाफलकं शिलापट्टः । नौस्तरिः ।...30...स्वान्गुरून्पितृव्यादीन्... 36... अन्यत्र शास्त्रादौ... 39. एतेन द्वितीयेनोपनयनाख्येन जन्मना तेषां त्रैवर्णिकानां द्विजत्वम् । एवकारो निषेकादिश्मशानान्तसंस्कारवतोऽप्यनुपनीतस्य द्विजत्वनिरासार्थः ।...40...शूद्रसमः शूद्रवद्वेदानधिकारी...

चार्ये प्रेते गुरुवद्गुरुपुत्रे वर्तेत । ४४ । गुरुदारेषु सवर्णेषु वा । ४५ । तदभावेऽग्निशुश्रूषुर्नैष्ठिको ब्रह्मचारी स्यात् । ४६ ।

एवं चरति यो विप्रो ब्रह्मचर्यमतन्द्रितः ।
स गच्छत्युत्तमं स्थानं न चेह्वाजायते पुनः ॥ ४७ ॥
कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ।
अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥ ४८ ॥
एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।
सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥ ४९ ॥
तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम् ।
उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति ॥ ५० ॥
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ ५१ ॥
अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ ५२ ॥

---

48. om. $V^{1-3}$. धर्मज्ञा ब्रह्मचारिणः ॥ $V^4$ N. (in $V^4$); ब्रह्मज्ञा ब्रह्मवादिनः ॥ $C^{1,2}$v. See M. XI, 121. 49. एकस्मिन् $V^4$ N. in $V^4$. See M. XI, 123.

---

45... दारशब्दोपादानं बह्वीष्वन्यतमा प्राप्त्यर्थम् ।... 47...यो विप्रोऽनलसः सन्ब्रह्मचर्यं चरति स उत्तमं स्थानं...ब्रह्म गच्छति प्राप्नोति ब्रह्मलोकमवाप्नोति ।... 48. त्रैवर्णिकस्य ब्रह्मचारिणो बुद्धिपूर्वं स्त्रीसंगममन्तरेण रेतःसेकम् ( स्त्रीयोनौ शुक्रोत्सर्गम् Kullûka on M. XI, 121 )... 51... प्रातः स्नात्वार्कं गन्धादिभिरभ्यर्च्य पुनर्मामैत्विन्द्रियमित्येतामृचम्... 52...तदावकीर्णी भवतीति तदुक्तं कुर्यात् ।...

तं चेदभ्युदियात्सूर्यः शयानं कामकारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ ५३ ॥ २८ ॥

---

यस्तूपनीय व्रतादेशं कृत्वा वेदमध्यापयेत्तमाचार्यं विद्यात् ।१। यस्त्वेनं मूल्येनाध्यापयेत्तमुपाध्यायमेकदेशं वा । २ । यो यस्य यज्ञे कर्माणि कुर्यात्तमृत्विजं विद्यात् । ३ । नापरीक्षितं याजयेत् । ४ । नाध्यापयेत् । ५ । नोपनयेत् । ६ ।

अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ ७ ॥
धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥ ८ ॥

---

XXIX, 3. यज्ञकर्माणि V[4]. 7. यश्च धर्मेण C[2].

---

53. तं ब्रह्मचारिणमविज्ञानाच्छास्त्रार्थापरिज्ञानात्कामकारतो बुद्धिपूर्वं सुप्तं सूर्यश्चाभ्युदेति... । जपसंख्या चाष्टसहस्रम् ।... XXIX, 1... व्रतानि महानाम्न्याद्युपनिषदध्ययनाङ्गान्युपदिश्य वेदमेकां शाखां साङ्गमध्यापयेदसौ... 2. यः पुनरेनमन्येनोपनीतं मूल्येन भृत्या कृत्स्नं वेदमभृत्या वा वेदैकदेशमष्टकाध्यायाद्यध्यापयेत्तम्... 3. यो... यज्ञे श्रौते ज्योतिष्टोमादौ स्मार्ते च पाकयज्ञादौ वृतो... यज्ञकर्माणि... कुर्यात् 4. कुलशीलवृत्तादिभिरपरीक्षितम्... 7. इदं मया न ज्ञायते तदुपदेष्टव्यमिति सविनयं प्रश्नो धर्मस्तद्विपरीतः छलेनात्र भवद्भिः कथं पठ्यत इत्यधर्मस्तेन यः पृच्छति यश्च तस्मै प्रष्ट्रे... इदमेवमध्येतव्यमिति ब्रूते तयोरेकतरः प्रैति म्रियते । उभयोः छलवादित्वे द्वावपि म्रियेते ।

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिस्तेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मां ब्रूया वीर्यवती तथा स्याम् ॥ ९ ॥
यमेव विद्याः शुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्च नाह
तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥ १० ॥ २९ ॥

---

श्रावण्यां प्रौष्ठपद्यां वा छन्दांस्युपाकृत्यार्धपञ्चमा-न्मासानधीयीत । १ । ततस्तेषामुत्सर्गं बहिः कुर्यान्नानुपा-कृतानाम् । २ । उत्सर्जनोपाकर्मणोर्मध्ये वेदाङ्गाध्ययनं कुर्यात् । ३ । नाधीयीताहोरात्रं चतुर्दश्यष्टमीषु च । ४ । नर्त्वन्तरग्रहसूतके । ५ । नेन्द्रप्रयाणे । ६ । न

---

10. कतमांश्च $C^{1,2}$. XXX, 2. कुर्यात् । $V^{1-4}$v. See the C.
3. उत्सर्जनोपाकर्ममध्ये $V^{4}$; उत्सर्गोपाकर्मणोर्मध्ये $C^{1,2}$v. 6. नेन्द्रिय-प्रयाणे । $C^{1,2}$; नेतप्रयाणे v.

---

10. ...मेधाविनं धारणावन्तं...यश्च ते तुभ्यं न द्रुह्येदनिष्टकारी न स्यात्कतमच्च किमप्यप्रियं प्राह न ब्रूते... XXX, 1... तेषां दिनद्वय-प्राप्तावुत्तरं ग्राह्यम् ।... 2. तत उपाकर्मानन्तरम् । तेन च कथंचित्स्वकाले-ऽनुपाकृतावुत्सर्गकालप्राप्तावपि नोत्सर्गः किंतूपाकर्माकरणप्रायश्चित्तपूर्वक-मेव... 5. ऋतूनां चतुर्मासात्मकानां त्रयाणामन्तरे संधौ द्वितीयास्वन-ध्यायः । ग्रहो ग्रहणं तत्संभवं सूतकमशुचित्वम् । तत्र त्रिरात्रम् ।...6. इन्द्र इन्द्रध्वजस्तस्य प्रयाणं पातनं तेनोच्छ्रयोऽपि लक्ष्यते । तत्रोभयत्राहोरात्रम्...

वाति चण्डपवने । ७ । नाकालवर्षविद्युत्स्तनितेषु । ८ । न भूकम्पोल्कापातदिग्दाहेषु । ९ । नान्तःशवे ग्रामे । १० । न शस्त्रसंपाते । ११ । न श्वसृगालगर्दभनिर्ह्रादेषु । १२ । न वादित्रशब्दे । १३ । न शूद्रपतितयोः समीपे । १४ । न देवतायतनश्मशानचतुष्पथरथ्यासु । १५ । नोदकान्तः । १६ । न पीठोपहितपादः । १७ । न हस्त्यश्वोष्ट्रनौगोयानेषु । १८ । न वान्तः । १९ । न विरिक्तः । २० । नाजीर्णी । २१ । न पञ्चनखान्तरागमने । २२ । न राजश्रोत्रियगोब्राह्मणव्यसने । २३ । नोपाकर्मणि । २४ । नोत्सर्गे । २५ । न सामध्वनावृग्यजुषी । २६ । नापररात्रमधीत्य शयीत । २७ । अभियुक्तोऽप्यनध्यायेष्वध्ययनं परिहरेत् । २८ । यस्मादनध्यायाधीतं नेहामुत्र फलदम् । २९ । तदध्ययनेनायुषः क्षयो गुरुशिष्ययोश्च । ३० । तस्मादनध्यायवर्जं गुरुणा ब्रह्मलोकका-

---

12. ॰निर्ह्रादे $C^{1,2}$v. 29. नेह नामुत्र $C^{1,2}$v.

---

8. अकाले वर्षाकालादन्यत्र... त्रिरात्रमनध्यायः । 9. N. quotes M. IV, 105. 18. हस्त्याद्यारूढस्य यानग्रहणात्तद्युक्तरथादियानस्य चानध्यायः ।... 19. वान्तः कृतवमनो नाधीयीताहोरात्रम् ॥ 20... नाधीयीताहोरात्रम् ॥ 21. अजीर्णी यावदजीर्णपाकं नाधीयीत ॥ 22... अहोरात्रमनध्यायः । तत्र विशेषः ।... 23. श्रोत्रिय एकशाखाध्यायी ।... यावदुपशमनमनध्यायः ।... 24. उपाकर्मानन्तरं त्र्यहमनध्यायः ।... 25. उत्सर्जनेऽपि त्र्यहम् ।... 27. तत्राधीत्य न शयीत किंतु यावत्सूर्योदयं जागृयात् ।... 28. अभियुक्तोऽन्येन पृष्टोऽपि...

मेन विद्या सच्छिष्यक्षेत्रेषु वप्तव्या ।३१। शिष्येण ब्रह्मारम्भावसानयोर्गुरोः पादोपसंग्रहणं कार्यम् । ३२ । प्रणवश्च व्याहर्तव्यः । ३३ । तत्र च यदृचोऽधीते तेनास्याज्येन पितॄणां तृप्तिर्भवति । ३४ । यद्यजूंषि तेन मधुना । ३५ । यत्सामानि तेन पयसा । ३६ । यदाथर्वणं तेन मांसेन । ३७ । यत्पुराणेतिहासवेदाङ्गधर्मशास्त्राण्यधीते तेनास्यान्नेन । ३८ । यश्च विद्यामासाद्यास्मिंल्लोके तया जीवेन्न सा तस्य परलोके फलप्रदा भवेत् । ३९ । यश्च विद्यया यशः परेषां हन्ति । ४० । अननुज्ञातश्चान्यस्मादधीयानान्न विद्यामादद्यात् । ४१ । तदादानमस्य ब्रह्मस्तेयं नरकाय भवति । ४२ ।

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं न तं द्रुह्येत्कदाचन ॥ ४३ ॥
उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ४४ ॥



37. यच्चा० C[1,2]v. 41. अनुज्ञात० C[2]. 42. ब्रह्मणः स्तेयं C[1,2].

40. यश्च विद्यया वादजल्पाभ्यां परेषां यशः पराजयेन नाशयति तस्यापि परत्राफलैव विद्या ॥ 41. गुर्वनुज्ञामन्तरेणान्यार्थमधीयानादपि गुरोर्विद्यां नादद्यात्। आहूतश्चाप्यधीयीतेति स्मरणात् ( Y. I, 27 ) ॥ 43. लौकिकं काव्यालंकारादिविषयं वैदिकं साङ्गवेदविषयम् ।...

कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
संभूतिं तस्य तां विद्याद्योनाविह जायते ॥ ४५ ॥
आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साजरामरा ॥ ४६ ॥

य आवृणोत्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं वै मन्येत्पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ४७ ॥ ३० ॥

---

त्रयः पुरुषस्यातिगुरवो भवन्ति । १ । पिता माता आचार्यश्च । २ । तेषां नित्यमेव शुश्रूषुणा भवितव्यम् । ३ । यत्ते ब्रूयुस्तत्कुर्यात् । ४ । तेषां प्रियहितमाचरेत् । ५ । न तैरननुज्ञातः किंचिदपि कुर्यात् । ६ ।
एत एव त्रयो वेदा एत एव त्रयः सुराः ।
एत एव त्रयो लोका एत एव त्रयोऽग्नयः ॥ ७ ॥

---

XXXI, 7. एत ए० त्र० सुराः । om. v. See M. II, 230.

---

46. वेदपारगोऽखिलवेदविदाचार्यः... 47. वेदाध्यापनेनैहिकामुष्मिकसकलदुःखनिरासेनाध्येतारमदुःखं कुर्वंस्तेन च अमृतं मोक्षं महावाक्याध्यापनार्थप्रतिपादनद्वारा संप्रयच्छन् ...अस्य कृतमुपकारं वेदाध्यापनलक्षणं जानन्... XXXI, 7... त्रयः सुरा ब्रह्मविष्णुशिवाः पूज्यत्वेन सुरसंस्तवः । त्रयो लोका नरसुरब्रह्मलोकाः ।...

पिता गार्हपत्योऽग्निर्दक्षिणाग्निर्माता गुरुराहवनीयः ॥८॥
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥९॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ १० ॥ ३१ ॥

---

राजर्त्विक्छ्रोत्रियाधर्मप्रतिषेध्युपाध्यायपितृव्यमातामहमातुलश्वशुरज्येष्ठभ्रातृसंबन्धिनश्चाचार्यवत् ।१। पत्न्य एतेषां सवर्णाः ।२। मातृष्वसा पितृष्वसा ज्येष्ठा स्वसा च ।३। श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम् ।४। हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं न पादोपसंस्पर्शनम् ।५। गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमनपादप्रक्षालनादीनि न कु-

---

XXXII, 6. ०प्रक्षालनं न कुर्यात् । $C^{1,2}$v.

---

10. मध्यमं देवलोकम्... XXXII. 1...अधर्मप्रतिषेधी निषिद्धकर्मणो निवर्तकः । ... संबन्धिनौ पुत्रदुहितृश्वशुरौ ।... 5. हीनवर्णे क्षत्रियवैश्ये बहुवचनान्मूर्धाभिषिक्ताद्या न शूद्रापत्नी त्वविशेषणात्तासां दूरादेवाभिवादनं कार्यम् न पादावुपस्पृश्य । प्रत्युत्थानं त्वनुवर्तते ।... 6...गात्राणामुत्सादनमुद्वर्तनमभ्यञ्जनं च । अञ्जनं नेत्रयोः कज्जलादिना ।... आदिपदात्स्नापनादिग्रहणम् । नोच्छिष्टाशनस्नापन० इति गौतमीयात् । ( Gaut. II, 32 ) । गुरुपत्नीनामिति शेषः ॥

यात् । ६ । असंस्तुतापि परपत्नी भगिनीति वाच्या पुत्रीति मातेति वा । ७ । न च गुरूणां त्वमिति ब्रूयात् । ८ । तदतिक्रमे निराहारो दिवसान्ते तं प्रसाद्याश्नीयात् । ९ । न च गुरुणा सह विगृह्य कथाः कुर्यात् । १० । न चैवास्य परीवादम् । ११ । न चानभिप्रेतम् । १२ ।

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णे विंशतिवर्षे च गुणदोषौ विजानता ॥ १३ ॥
कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ १४ ॥
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ १५ ॥

---

10. कथां C[1,2]v. 11. नैव चास्य C[1,2]v. 14. अभिवादनकं कुर्याद० C[1,2]v. See M. II, 216.

---

7. असंस्तुता अपरिचिता ।... परपत्नी न परदास्यादिः । भगिन्यादिशब्दैर्वाच्या । व्यवस्थितश्चायं विकल्पः । समानवयस्का भगिनीति यूनवयस्का पुत्रीति अधिकवयस्का मातेति ।... 9. तेषां गुरूणामतिक्रमे त्वंकारादिवचने आहाररहितः सायं तं गुरुं प्रसाद्यापराधं क्षमाप्याश्नीयात् ।... 10. गुरुणा सह विगृह्य विजिगीषया कथा जल्पवितण्डवाक्य कुर्यात् ।... 12. गुरोरनभिप्रेतं प्रतिकूलम्... 14. युवा शिष्यो युवतीनां भुवि पादावनुपस्पृशनसावहमित्यभिवादयेदहं भो अमुकशर्मेति स्वनाम निर्दिशन्विधिवद्व्यत्यस्तपाणिनेत्याद्युक्तरीत्या कामं यथेच्छमभिवादनं कुर्यात् ॥

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मानस्थानानि गरीयो यद्यदुत्तरम् ॥ १६ ॥
ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १७ ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ १८ ॥ ३२ ॥

---

अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति । १ । परिग्रहप्रसङ्गाद्विशेषेण गृहाश्रमिणः । २ । तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु, प्रवर्तते । ३ । जातिभ्रंशकरेषु संकरीकरणेष्वपात्रीकरणेषु च । ४ । मलावहेषु प्रकीर्णकेषु च । ५ ।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्रयं त्यजेत् ॥ ६ ॥ ३३ ॥

---

मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि । १ ।

---

18. जन्मनः $C^{1,2}$. XXXIII, 2. गृहाश्रमिणाम् $V^4$.

---

16... बन्धुरभिजनः ।... कर्म श्रौतस्मार्तादि ।... XXXIII, 2. परिग्रहो गृहदारादिस्वीकारः ।... 4... असंकरं ब्राह्मणादिवर्णमपि संकरं संकरसमानधर्माणं कुर्वन्तीति संकरीकरणानि । पात्रं प्रतिग्रहाद्यर्हमप्यपात्रं प्रतिग्रहाद्यनर्हं कुर्वन्तीत्यपात्रीकरणानि ॥

अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथं च न ॥२॥३४॥

---

ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि । १ । तत्संयोगश्च । २ । संवत्सरेण पतति पतितेन सहाचरन् । ३ । एकयानभोजनासनशयनैः । ४ । यौनस्रौवमौखैः संबन्धैस्तु सद्य एव । ५ ।
अश्वमेधेन शुद्ध्येयुर्महापातकिनस्त्विमे ।
पृथिव्यां सर्वतीर्थानां तथानुसरणेन च ॥ ६ ॥ ३५ ॥

---

यागस्थस्य क्षत्रियस्य वैश्यस्य च रजस्वलायाश्चान्तर्वत्नयाश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि । १ । कौटसाक्ष्यं सुहृ-

---

XXXV, 5. यौनस्रौवमुख्यैः संबन्धैस्तु $V^{1-4}$ N.; यौनस्रौवमौखसंबन्धात्स॰ $C^{1,2}$; यौनमौखस्रौवसंबन्धात्स॰ v. मौख seems the *lectio doctior* and corresponds to यौनस्रौव. See also the Pet. Dict. 6. वा for च $C^{1,2}$v Ap. XXXVI, 1. अविज्ञातगर्भस्य $V^{4}$.

---

XXXV, 5... स्रुवभवः स्रौवः स च पतितस्य पतितेन सह वा याजनम् ।... 6...चकारः साधनतासमुच्चयार्थः ।... XXXVI, 1...अविज्ञातः स्त्रीपुंनपुंसकत्वेनानिर्णीतो यो गर्भस्तस्य हननम् ।...

द्रुध एतौ सुरापानसमौ । २ । ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम् । ३ । पितृव्यमातामह-मातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम् । ४ । पितृष्वसृमातृष्वसृस्वसृगमनं च । ५ । श्रोत्रियर्त्विगुपा-ध्यायमित्रपत्न्यभिगमनं च । ६ । स्वसुः सख्याः सगो-त्राया उत्तमवर्णायाः कुमार्या अन्त्यजाया रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च । ७ ।

अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन च ॥ ८ ॥ ३६ ॥

---

अनृतवचनमुत्कर्षे । १ । राजगामि पैशुन्यम् । २ । गुरोश्चालीकनिर्बन्धः । ३ । वेदनिन्दा । ४ । अधीतस्य

---

XXXVI, 8. वा for च $V^{1-3}$ $C^{1,2}v$. XXXII, 2. $C^{1,2}v$ insert च before पैशुन्यम् ।

---

3. ब्राह्मणस्येति पञ्चम्यन्तस्य पृथक्करणं त्रितयेनापि संबन्धार्थम् । तेन ब्राह्मणस्वामिकाया भूमेर्ब्राह्मणस्वामिकस्य सुवर्णातिरिक्तनिक्षेपस्य च हरणं ब्राह्मणस्वामिकसुवर्णस्तेयसमम् ।... 7...सख्याः पृथग्निर्देशः स्वसख्या अपि प्राप्त्यर्थः ।... कुमारी अनूढा अनुपभुक्ता च ब्राह्मणकन्या । अन्त्यजा रजक्यादिः ।... शरणागता त्राणार्थिनी । प्रव्रजिता संन्यस्ता । निक्षिप्ता रक्षार्थं समर्पिता ।... XXXVII, 1. स्वोत्कर्षनिमित्तं मिथ्यावचनं मयेदं विहितं मयेदं दापितमित्यादि... 2. राजन्यविदितालपदोषख्यापनम् । यत्तु राजन्यविद्यमानपरकीयमहादोषवचनं तद्ब्रह्महत्यासमम् । 3. गुरोर्जन-कस्यालीको मिथ्या निर्बन्धो दोषारोपणम् । त्वयेदं गृहकार्यं नाशितमिति ।

च त्यागः ।५। अग्निपितृमातृसुतदाराणां च ।६। अभोज्यान्नाभक्ष्यभक्षणम् ।७। परस्वापहरणम् ।८। परदाराभिगमनम् ।९। अयाज्ययाजनम् ।१०। विकर्मजीवनम् ।११। असत्प्रतिग्रहश्च ।१२। क्षत्रविट्शूद्रगोवधः ।१३। अविक्रेयविक्रयः ।१४। परिवित्तितानुजेन ज्येष्ठस्य ।१५। परिवेदनम् ।१६। तस्य च कन्यादानम् ।१७। याजनं च ।१८। व्रात्यता ।१९। भृतकाध्यापनम् ।२०। भृताच्चाध्ययनादानम् ।२१। सर्वाकरेष्वधीकारः ।२२। महायन्त्रप्रवर्तनम् ।२३। द्रुमगुल्मवल्लीलतौषधीनां हिंसा ।२४। स्त्रिया

11. विकर्मणा जीवनं च $C^1$; वि॰ जीवनश्च $C^2$. 24, 25. द्रुम॰ हिंसया जीवनम् । v. 25. स्त्रीजीवनम् $C^{1,2}$.

8. सुवर्णतत्समन्यतिरिक्तस्य परस्वस्य धान्यकुप्यादेरपहरणम् ।... 10. अयाज्या जातिकर्मदुष्टाः शूद्रव्रात्यादयस्तेषां याजनं पतितयाजनस्य महापातकत्वात् ॥ 11. विपरिवृत्तं कर्म विकर्म यथा ब्राह्मणस्य क्षत्रियवैश्यवृत्ती तदुपजीवनम् ।... 14. अविक्रेयं लाक्षालवणादि... 17. तस्य परिवेत्तुश्चकारात्परिवित्तेश्च... 19. यथाकालमनुपनयनम् ।... 20...यद्यप्युपाध्यायलक्षणेऽस्यानुज्ञा गम्यते तथाप्यापद्विषयासौ मन्तव्या । ...अनापदि भृतकाध्यापनमुपपातकमिति न विरोधः ।... 22. सर्वे च आकराः सुवर्णरजताद्युत्पत्तिस्थानानि तेषां राजादेशेनाधिकारः । सर्वशब्दात्कृत्रिमाणां वस्त्राद्युत्पत्तिस्थानानामपि ग्रहणम् ।... 23. एकप्रयोगेनानेकहिंसाकरं नाल्यादिमहायन्त्रं तस्य प्रवर्तनं निर्माणम् । 24... लताः दीर्घयायिन्यो द्राक्षादयः ।...हिंसा छेदः इन्धनाद्युद्देशेन...

जीवनम् । २५ । अभिचारबलकर्मसु च प्रवृत्तिः । २६ । आत्मार्थे क्रियारम्भः । २७ । अनाहिताग्निता । २८ । देवर्षिपितृऋणानामनपक्रिया । २९ । असच्छास्त्राभिगमनम् । ३० । नास्तिकता । ३१ । कुशीलवता । ३२ । मद्यपस्त्रीनिषेवणम् । ३३ । इत्युपपातकानि । ३४ ।

उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः ।
पराकं च तथा कुर्युर्यजेयुर्गोमखेन च ॥ ३५ ॥ ३७ ॥

---

ब्राह्मणस्य रुजस्करणम् । १ । अघ्रेयमद्ययोर्घ्रातिः । । २ । जैह्म्यम् । ३ । पशुषु मैथुनाचरणम् । ४ । पुंसि च । ५ । इति जातिभ्रंशकराणि । ६ ।

जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।
कुर्यात्सांतपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ ७ ॥ ३८ ॥

---

29 T. om. V1–4. अनपाक्रिया C1,2v; अनपक्रिया N. 35 गोसवेन च V1–4 N. XXXVIII. v makes one Sûtra of 1—6.

---

26. परमरणाय जपहोमाद्यभिचारः । अनिषिद्धस्यापि परानभिमतस्य बलावष्टम्भेन करणं बलकर्म ।... 27. अत्र क्रियासामान्येऽपि पचनक्रिया ग्राह्यते । अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणादिति स्मरणात् ( below, LXVII, 43 ) ।...30. असतां वेदबाह्यादीनां शास्त्रेष्वभिगमनमायासः । 35... चशब्दो विकल्पार्थः... XXXVIII, 2. अघ्रेयं विण्मूत्रादि... 5...चकारात्स्त्रियामप्ययोनौ गमनम् । ...इति योगिस्मरणात् ( Y. II, 293 ).

ग्राम्यारण्यानां पशूनां हिंसा संकरीकरणम् । १ ।
संकरीकरणं कृत्वा मासमश्नीत यावकम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत् ॥ २ ॥ ३९॥

---

निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्य-
भाषणं शूद्रसेवनमित्यपात्रीकरणम् । १ ।
अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति ।
शीतकृच्छ्रेण वा भूयो महासांतपनेन वा ॥ २ ॥ ४० ॥

---

पक्षिणां जलचराणां जलजानां च घातनम् । १ ।

---

XL, 2. भूमि v.

---

XXXIX, 1. ग्राम्या अव्यादयः । आरण्या महिषादयः ।... तत्र गोमनुष्यवधस्योपपातकादिपरिहारात्तदितरहिंसा संकरीकरणम् । ...2. इच्छानिच्छे अनुवर्तेते । तत्रेच्छया संकरीकरणं कृत्वा... यावकम्... अश्नीयात् । अनिच्छया तत्करणे कृच्छ्रातिकृच्छ्रं कुर्यात् । स्वस्यासामर्थ्ये ब्राह्मण-द्वारापि कारयितुं णिच्प्रयोगः ।... XL 1. निन्दितेभ्यो म्लेच्छादिभ्यो विनापि प्रतिग्रहं वृद्ध्यादिरूपेण धनादानम् । वाणिज्यमनिषिद्धस्यापि वस्तुनः क्रयविक्रयौ । कुसीदमनिषिद्धयापि वृद्ध्या जीवनम् । असत्यभाषणं साक्ष्यमन्तरेणापि । शूद्रसेवनं प्रेष्यत्वं विनाप्याज्ञाकरणं त्रैवर्णिकानाम् । इत्येवंप्रकारमपात्रीकरणमसत्प्रतिग्रहनिषिद्धविक्रयनिषिद्धसाक्ष्यानृतशूद्रप्रेष्यत्वानामुपपातकत्वात् ।... 2. इच्छया अपात्रीकरणं कृत्वा वक्ष्यमाणेन तप्तकृच्छ्रेण शुध्यति । अनिच्छया तत्करणे तु शीतकृच्छ्रेण । भूयोऽभ्यासेन तत्करणे महासांतपनेन शुध्यति ।... XLI, 1... जलचरा ये जलं प्रविश्य मत्स्यादीन्गृह्णन्ति ते उदादयो ( उद्रा० ? ) जीवविशेषाः । जलजा मत्स्यादयः । तेषां घातनम् ॥

ग्मिकीटानां च । २ । मद्यानुगतभोजनम् । ३ । इति
लावहानि । ४ ।
मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम् ॥५॥४१॥

यदनुक्तं तत्प्रकीर्णकम् । १ ।
कीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् ।
ायश्चित्तं बुधः कुर्याद्ब्राह्मणानुमतः सदा ॥२॥४२॥

अथ नरकाः । १ । तामिस्रम् । २ । अन्धतामिस्रम्
३ । रौरवम् । ४ । महारौरवम् । ५ । कालसूत्रम् । ६ ।
महानरकम् । ७ । संजीवनम् । ८ । अवीचिः । ९ ।
ापनम् । १० । संप्रतापनम् । ११ । संघातकम् । १२ ।
ाकोलम् । १३ । कुड्मलम् । १४ । पूतिमृत्तिकम् । १५ ।

XLII, 2. ०मतो यथा ॥ $V^{1-4}$ XLIII, 10. तपनम् । $V^{1-4}$.
ee 11; Y. III, 224; and the C. 13. काकोलः । $V^{1-4}$.
ee the P. Dict. 14. कुट्वलं । $V^{1-3}$; कुण्डलं । कुट्टानं । $C^{1,2}$;
ट्वालं v. See M. IV, 89; Y. III, 222; and the C.

3. मद्येन पूर्वोक्तेन द्वादशविधेनानुगतं सदृशं मदजनकतया जातीफलादि
क्षणम् । यद्वा मद्यस्य सुराया अनु पश्चाद्गतमुत्पन्नं भङ्गादि तद्भक्षणम् ।...
. कामकृतेषु मलिनीकरणीयेषु तप्तकृच्छ्रेण...अकामतः पुनस्तत्करणे
च्छ्रेण ( कृच्छ्रातिकृच्छ्रेण )... विशुद्धिः ॥ XLIII, 10. अग्निसंनिकर्षेण
पानुभवः ॥ 14. गोण्यादिषु प्रक्षिप्य तन्मुखबन्धनम् ॥ 17. पुटपाकः ॥

लोहशङ्कुः । १६ । ऋचीषम् । १७ । विषमपन्थानम् । १८ । कण्टकशाल्मलिः । १९ । दीपनदी । २० । असिपत्रवनम् । २१ । लोहचारकमिति । २२ । एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्यायेण कल्पं पच्यन्ते । २३ । महापातकिनो मन्वन्तरम् । २४ । अनुपातकिनश्च । २५ । उपपातकिनश्चतुर्युगम् । २६ । कृतसंकरीकरणाश्च संवत्सरसहस्रम् । २७ । कृतजातिभ्रंशकरणाश्च । २८ । कृतापात्रीकरणाश्च । २९ । कृतमलिनीकरणाश्च । ३० । प्रकीर्णकपातकिनश्च बहून्वर्षपूगान् । ३१ ।

कृतपातकिनः पापाः प्राणत्यागादनन्तरम् ।
याम्यं पन्थानमासाद्य दुःखमश्नन्ति दारुणम् ॥ ३२ ॥
यमस्य पुरुषैर्घोरैः कृष्यमाणा यतस्ततः ।
सुकृच्छ्रेणानुकारेण नीयमानाश्च ते यथा ॥ ३३ ॥

---

17. ऋबीसं । $V^{1-4}v$; ऋचीसं । $C^{1,2}$. See the C. 25 om. $C^{1,2}v$. 26. चातुर्युगम् । $V^{1-2}$ $C^{1,2}v$; चतुर्युगं N. 31. ०युगान् $C^{1,2}v$. 32. सर्वे for पापाः $C^{1,2}v$.

---

23...पर्यायेण पच्यन्ते यातनामनुभवन्ति ॥ 31. बहून्त्रीन् । वर्षपूगान्वर्षशतानि ।... 32. कृतानि नवविधानि पातकानि यैस्ते । अकृतप्रायश्चित्ता अत एव पापाः पापाक्रान्ताः... 33. भयानकैर्यमदूतैः समविषमेषु देशेषु कृष्यमाणाः कृष्टानुकारिणा करविशेषेण नरकं नीयमानास्ते यथा दुःखमनुभवन्ति एवं नरकोपभोगानन्तरमपि तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि चेत्यध्यायान्तेनान्वयः ॥

श्वभिः शृगालैः क्रव्यादैः काककङ्कबकादिभिः ।
अग्नितुण्डैर्भक्ष्यमाणा भुजङ्गैर्वृश्चिकैस्तथा ॥ ३४ ॥
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः ।
क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया ॥ ३५ ॥
क्षुधया व्यथमानाश्च घोरैर्व्याघ्रगणैस्तथा ।
पूयशोणितगन्धेन मूर्छमानाः पदे पदे ॥ ३६ ॥
परान्नपानं लिप्सन्तस्ताड्यमानाश्च किंकरैः ।
काककङ्कबकादीनां भीमानां सदृशाननैः ॥ ३७ ॥
क्वचित्क्वाथ्यन्ते तैलेन ताड्यन्ते मुसलैः क्वचित् ।
आयसीषु च वध्यन्ते शिलासु च तथा क्वचित् ॥ ३८ ॥
क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक् क्वचित् ।
क्वचिद्विष्ठां क्वचिन्मांसं पूयगन्धि सुदारुणम् ॥ ३९ ॥
अन्धकारेषु तिष्ठन्ति दारुणेषु तथा क्वचित् ।
कृमिभिर्भक्ष्यमाणाश्च वह्नितुण्डैश्च दारुणैः ॥ ४० ॥
क्वचिच्छीतेन बाध्यन्ते क्वचिचामेध्यमध्यगाः ।
परस्परमथाश्नन्ति क्वचित्प्रेताः सुदारुणाः ॥ ४१ ॥

---

38. विध्यन्ते C[1,2]; पच्यन्ते v. 41. ०मध्यमाः । V[4].

---

34....अग्निस्तुण्डे येषां ते भल्लूकादयः शेषं प्रसिद्धम् ॥ 37...काकाद्याननत्वं किंकरविशेषणम् ॥ 38...वध्यन्ते पिष्यन्ते आयसीषु लोहस्थलीषु (०स्थालीषु ?) शिलासु च ।... 41. अमेध्यं विष्ठादि । परस्परं प्रेताः प्रेतानश्नन्ति सुदारुणा बुभुक्षातिशयेन ॥

क्वचिद्भूतेन ताड्यन्ते लम्बमानास्तथा क्वचित् ।
क्वचित्क्षिप्यन्ति बाणौघैरुत्कृत्यन्ते तथा क्वचित् ॥ ४२ ॥
कण्टेषु दत्तपादाश्च भुजङ्गाभोगवेष्टिताः ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ ४३ ॥
भग्नपृष्ठशिरोग्रीवाः सूचीकण्ठाः सुदारुणाः ।
कूटागारप्रमाणैश्च शरीरैर्यातनाक्षमैः ॥ ४४ ॥
एवं पातकिनः पापमनुभूय सुदुःखिताः ।
तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च ॥४५॥४३॥

---

अथ पापात्मनां नरकेष्वनुभूतदुःखानां तिर्यग्योनयो भवन्ति । १ । अतिपातकिनां पर्यायेण सर्वाः स्थावरयोनयः । २ । महापातकिनां च कृमियोनयः । ३ ।

---

43. कण्ठेषु $V^{1-4}$ $C^{1,2}v$ N. in $V^4$. 44. सुदारुणाः all. No comment. Cf. 39, 40, 41.

---

42. भूतेन पूर्ववृत्तेन लम्बमाना वृक्षादौ बन्धनेन । क्षिप्यन्तीति पदव्यत्ययः ॥ 43. कण्टाः कण्टकास्तेषु । भुजङ्गाभोगाः सर्पशरीराणि । यन्त्रैस्तिलेक्षुनिष्पीडनयन्त्रैः पीड्यमानाः । कण्टकाक्रान्तपादत्वेन गमनाशक्त्या जानुभिः कृष्यमाणाः ॥ 44. भग्नं पृष्ठं पृष्ठभागः शिरो मस्तकं ग्रीवा शिरोधिर्येषां... सूचीस्थौल्यप्रमाणः कण्टनालो येषाम् । कूटाख्यमगारं गृहविशेषस्तत्प्रयोजनम् । यातनाक्षमैरिति यातनासु दुःखानुभवेष्वतिस्थूलान्येव शरीराणि क्षमन्ते न सूक्ष्माणि स्वल्पदुःखेनैव तेषां क्षिप्रं नाशात् ॥ 45. पातकिनो नरकं नीयमाना यथा दुःखान्यनुभवन्त्येवमेव नरकेषु पापफलमनुभूय पापशेषेण... दुःखानि प्रपद्यन्ते ॥ XLIV, 3... वृक्षगुल्मलतादिका...योनयः...

अनुपातकिनां पक्षियोनयः । ४ । उपपातकिनां जलजयोनयः । ५ । कृतजातिभ्रंशकराणां जलचरयोनयः । ६ । कृतसंकरीकरणकर्मणां मृगयोनयः । ७ । कृतापात्रीकरणकर्मणां पशुयोनयः । ८ । कृतमलिनीकरणकर्मणां मनुष्येष्वस्पृश्ययोनयः । ९ । प्रकीर्णेषु प्रकीर्णा हिंस्राः क्रव्यादा भवन्ति । १० । अभोज्यान्नाभक्ष्याशी कृमिः । ११ । स्तेनः श्येनः । १२ । प्रकृष्टवर्त्मापहारी बिलेशयः । १३ । आखुर्धान्यहारी । १४ । हंसः कांस्यापहारी ।१५। जलं हृत्वाभिप्लवः । १६ । मधु दंशः । १७ । पयः काकः । १८ । रसं श्वा । १९ । घृतं नकुलः । २० । मांसं गृध्रः । २१ । वसां मद्गुः । २२ । तैलं तैलपायिकः । २३ । लवणं चीरिवाक् । २४ । दधि बलाका । २५ । कौशेयं हृत्वा भवति तित्तिरिः । २६ । क्षौमं दर्दुरः । २७ ।

XLIV, 4 om. $C^{1,2}$v. 24. T. om. $V^{1,3}$. वीचिवाकः । $V^2$; वीचिवाक् $C^{1,2}$; चारिक् v. See the C. and M. XII, 63.

9. मनुष्येष्वस्पृश्याश्चाण्डालादयस्तद्योनयः ॥ 10...व्याघ्रादयो भवन्ति ॥ 12. सुवर्णातिरिक्तद्रव्यापहारी... 13. प्रकृष्टस्य महतो वर्त्मनोऽपहारी भूमिग्रहणेन संकोचको बिलेशयः सर्पादिः ॥ 16... अभिप्लवो जलकुक्कुटः ॥ 19. रसमिक्ष्वादेः... 23... तैलपायिकः परोष्णीनामकः पक्षिविशेषः (? मक्षिकाविशेषः $V^{1,23}$ : for मक्षिका ? ) ॥ 24... चीव्यनुकारिणी ( वीच्य० $V^{1,2,3}$ ) वाग्यस्य स चीर्याख्यो मक्षिकाविशेषः ॥ 25. बलाका बिसकण्ठकः ॥

कार्पासतान्तवं क्रौञ्चः । २८ । गोधा गाम् । २९ । वाल्गुदो गुडम् । ३० । छुच्छुन्दरिर्गन्धान् । ३१ । पत्रशाकं बर्हो । ३२ । कृतान्नं सेधा ।३३। अकृतान्नं शल्यकः ।३४। अग्निं बकः । ३५ । गृहकार्युपस्करम् । ३६ । रक्तवासांसि जीवजीवकः । ३७ । गजं कूर्मः । ३८ । अश्वं व्याघ्रः ।३९। फलं पुष्पं वा मर्कटः । ४० । ऋक्षः स्त्रियम् । ४१ । यानमुष्ट्रः । ४२ । पशून्गृध्रः । ४३ ।

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।
अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ ४४ ॥
स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ ४५ ॥ ४४ ॥

---

अथ नरकाभिभूतदुःखानां तिर्यक्त्वमुत्तीर्णानां मनुष्येषु लक्षणानि भवन्ति । १ । कुष्ठ्यतिपातकी । २ ।

---

30 वान्तुदो $C^{1,2}$. 33. श्वावित् । $C^{1,2}v$. 37. जविञ्जविकः । $C^{1,2}$. 43. पशूनजः । प्रेतः पारजायी । $C^{1,2}$; पशूनजः । v. This is probably a correction. See Sûtra 21 and M. XII, 67. XLV, 1. नरकानुभूत॰ $V^{1-4}$. See the C.

---

30... वाल्गुदो वल्गुल्यवान्तरपक्षिविशेषः ।... 33. सेधा श्वावित् ॥ 36...गृहकारी चरटाख्यः कीटविशेषः ॥ 37... जीवजीवकश्चकोरः ॥ XLV, 1. नरकेषु तामिस्रादिष्वभितः सर्वेषु भूतान्युत्पन्नानि दुःखानि येषाम्...मनुष्यजन्मसु वक्ष्यमाणानि क्षयादीनि लक्षणानि तत्पापसूचकानि भवन्ति ।... 4...श्यावाः स्वभावकृष्णा दशना यस्य तादृक्...

ब्रह्महा यक्ष्मी । ३ । सुरापः श्यावदन्तकः । ४ । सुवर्णहारी कुनखी । ५ । गुरुतल्पगो दुश्चर्मा । ६ । पूतिनासः पिशुनः । ७ । पूतिवक्त्रः सूचकः । ८ । धान्यचौरोऽङ्गहीनः । ९ । मिश्रचोरोऽतिरिक्ताङ्गः । १० । अन्नापहारकस्त्वामयावी । ११ । वागपहारको मूकः । १२ । वस्त्रापहारकः श्वित्री । १३ । अश्वापहारकः पङ्गुः । १४ । देवब्राह्मणाक्रोशको मूकः । १५ । लोलजिह्वो गरदः । १६ । उन्मत्तोऽग्निदः । १७ । गुरोः प्रतिकूलोऽपस्मारी । १८ । गोघ्नस्त्वन्धः । १९ । दीपापहारकश्च ।२०। काणश्च दीपनिर्वापकः । २१ । त्रपुचामरसीसकविक्रयी रजकः । २२ । एकशफविक्रयी मृगव्याधः । २३ । कुण्डाशी भगास्यः । २४ । घाण्टिकः स्तेनः । २५ । वार्धुषिको भ्रामरी । २६ । मृष्टाश्येकाकी वातगुल्मी । २७ । समय-

---

27. मिष्टाश्येकाकी $C^{1,2}$; मृष्टाश्येको v.

---

5. ब्राह्मणस्वामिकसुवर्णापहारी... 6... दुश्चर्मा त्वग्दोषी भवति ।... 10. धान्येष्वेवोत्कृष्टमपहृत्य तत्परिमाणपूरणायावकृष्टं तन्मध्ये प्रक्षिपति स मिश्रचौरोऽतिरिक्ताङ्गः षडङ्गुल्यादिः ।... 12. अननुज्ञाताध्यायी पुस्तकापहारी संदेशाप्रवक्ता वा... 15... देवद्विजयोर्गालिप्रदाता मूकः ॥ 18. पितृप्रतिकूलकार्यपस्मारी ॥ 22... रजको वस्त्ररागकरः प्रतिलोमजः ॥ 23. एकशफा अश्वादयः... 24. कुण्डस्यान्नं कुण्डपरिमितं वाश्नातीति कुण्डाशी । भगवदास्यं यस्येति मैथुनाय मुखसमर्पकः ॥ 25. सुवर्णातिरिक्तद्रव्यस्तेनो घाण्टिको वैतालिकः ॥ 27. एकाकी मृष्टाशनो वातगुल्मवान् ॥ 28. संविद्व्यतिक्रमकारी खल्वाटः शिरश्चन्द्रिकावान् ॥

भेत्ता खल्वाटः । २८ । स्त्रीपद्यवकीर्णी । २९ । परवृत्तिघ्नो दरिद्रः । ३० । परपीडाकरो दीर्घरोगी । ३१ ।

एवं कर्मविशेषेण जायन्ते लक्षणान्विताः ।
रोगान्वितास्तथान्धाश्च कुब्जखञ्जैकलोचनाः ॥ ३२ ॥
वामना बधिरा मूका दुर्बलाश्च तथापरे ।
तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ ३३ ॥ ४५ ॥

---

अथ कृच्छ्राणि भवन्ति । १ । त्र्यहं नाश्नीयात् । २ । प्रत्यहं च त्रिषवणं स्नानमाचरेत् । ३ । त्रिः प्रतिस्नानमप्सु मज्जनम् । ४ । मग्नस्त्रिरघमर्षणं जपेत् । ५ । दिवा स्थितस्तिष्ठेत् । ६ । रात्रावासीनः । ७ । कर्मणोऽन्ते पयस्विनीं दद्यात् । ८ । इत्यघमर्षणम् । ९ । त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमयाचितमश्नीयादेष प्राजापत्यः ।१०। त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं पयस्त्र्यहं च नाश्नीयादेष तप्तकृच्छ्रः । ११ । एष एव शीतैः शीतकृच्छ्रः । १२ । कृच्छ्रातिकृच्छ्रः पयसा दिवसैकविंशतिक्षपणम् । १३ । उदकसक्तूनां मासाभ्यवहारेणोदक-

---

29. अवकीर्णी क्षतव्रतः श्लीपदी उच्छूनजङ्घचरणः ॥ 31. निष्कारणं परपीडाकरोऽसाध्यव्याधिमान् ॥ 33. तथापरे... षण्ढादयः । XLVI, 8. त्रिरात्रान्ते पयस्विनीं गां ब्राह्मणाय दद्यात् ॥ 10. सायं दिवाभोजनपरिहारेण नक्तकाले । प्रातः रात्रिभोजनपरिहारेण मध्याह्ने ।... दिवा रात्रौ वैकवारमयाचितं स्वीयं परकीयं वा याचनव्यतिरेकेणोपस्थितम् ।... त्र्यहं नाश्नीयादित्यनुवर्तते तेनान्ते त्रिरात्रमुपवसेत्सोऽयं प्राजापत्यः । त्र्यहम्...इति मनुस्मरणात् ( XI, 212 ) ... 13. एकविंशतिरात्रं पयसा दुग्धेन वर्तनं कृच्छ्रातिकृच्छ्रः ।...

कृच्छ्रः । १४ । बिसाभ्यवहारेण मूलकृच्छ्रः । १५ । बिल्वाभ्यवहारेण श्रीफलकृच्छ्रः । १६ । पद्माक्षैर्वा । १७ । निराहारस्य द्वादशाहेन पराकः । १८ । गोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकान्येकदिवसमश्नीयाद्द्वितीयमुपवसेदेतत्सांतपनम् । १९ । गोमूत्रादिभिः प्रत्यहाभ्यस्तैर्महासांतपनम् । २० । त्र्यहाभ्यस्तैश्चातिसांतपनम् । २१ । पिण्याकाचामतक्रोदकसक्तूनामुपवासान्तरितोऽभ्यवहारस्तुलापुरुषः । २२ । कुशपलाशोडुम्बरपद्मशङ्खपुष्पीवटब्रह्मसुवर्चलापत्त्रैः कथितस्याम्भसः प्रत्येकं पानेन पर्णकृच्छ्रः । २३ ।

कृच्छ्राण्येतानि सर्वाणि कुर्वीत कृतवापनः ।
नित्यं त्रिषवणस्नायी अधःशायी जितेन्द्रियः ॥ २४ ॥

---

XLVI. 18. द्वादशाहेनैव $C^{1,2}$; ॰नैव v. 23. ॰ब्राह्मीसुवर्चला॰ $V^{1-4}$ N.; ॰ब्रह्मसुवर्चलानां $C^{1,2}$; ब्रह्मसुर्चला v. 24. कृतपावनः । $C^{1,2}$.

---

15. मृणालस्य मासं भोजनेन मूलकृच्छ्रः ।... 16. मासं बिल्वफलभक्षणेन श्रीफलकृच्छ्रः ।... 17. पद्मबीजैर्मासं भक्षितैर्वा श्रीफलकृच्छ्रः ।... 20. गोमूत्रादिभिः षड्भिर्गव्यैः प्रत्यहाभ्यस्तैर्महासांतपनम् । षडहसाध्यं भवति ।... 21. तैरेव गोमूत्रादिभिः षड्भिः प्रत्येकं त्र्यहाभ्यस्तैरष्टादशाहिकमतिसांतपनं भवति ।... 22.... दशाहिकस्तुलापुरुषः ।... 23... एषां सप्तानां पत्त्रैः क्वथितमम्भः सप्ताहं पीत्वा पर्णकृच्छ्रः ।...

स्त्रीशूद्रपतितानां च वर्जयेच्चाभिभाषणम् ।
पवित्राणि जपेन्नित्यं जुहुयाच्चैव शक्तितः ॥२५॥४६॥

---

अथ चान्द्रायणम् । १ । ग्रासानविकारानश्नीयात् । २ । तांश्चन्द्रकलाभिवृद्धौ वर्धयेद्धानौ ह्रासयेदमावास्यायां नाश्नीयादेष चान्द्रायणो यवमध्यः । ३ । पिपीलिकामध्यो वा । ४ । यस्यामावास्या मध्ये भवति स पिपीलिकामध्यः । ५ । यस्य पौर्णमासी स यवमध्यः । ६ । अष्टौ ग्रासान्प्रतिदिवसं मासमश्नीयात्स यतिचान्द्रायणः । ७ । सायं प्रातश्चतुरश्चतुरः स शिशुचान्द्रायणः । ८ । यथाकथंचित्षष्ट्योनां त्रिशतीं मासेनाश्नीयात्स सामान्यचान्द्रायणः । ९ ।
व्रतमेतत्पुरा भूमिं कृत्वा सप्तर्षयोऽमलाः ।
प्राप्तवन्तः परं स्थानं ब्रह्मा रुद्रस्तथैव च ॥ १० ॥ ४७ ॥

---

XLVII, 1 om. v. 3. ०वृद्धौ क्रमेण व० $C^{1,2}$v. 6. षट्कानां $C^{1,2}$; om. v. 10. प्राप्नुवन्तः $C^{1,2}$. वरम् । $C^{1,2}$; ऽखिलाः । v.

---

XLVII, 3... शुक्लपक्षे यथा चन्द्रकला वर्धन्ते तथैवैकोपचयेन ग्रासान्वर्धयेत् । प्रतिपद्येको । द्वितीयायां द्वौ । तृतीयायां त्रय इत्यादि वृद्ध्या । पौर्णमास्यां पञ्चदश भवन्ति । ततः पुनश्चन्द्रकलाहानौ कृष्णपक्षे एकैकापचयेन ह्रासयेत् । प्रतिपदि चतुर्दश । द्वितीयायां त्रयोदश । तृतीयायां द्वादशेति हान्या । चतुर्दश्यामेको भवति । ततोऽमावास्यां नाश्नीयादुपवसेत् ।... 9. एतदुक्तविधिनेदं चान्द्रायणं पुरा कल्पान्तरे कृत्वा...

अथ कर्मभिरात्मकृतैर्गुरुमात्मानं मन्येतात्मार्थे प्रसृतियावकं श्रपयेत् । १ । न ततोऽग्नौ जुहुयात् । २ । न चात्र बलिकर्म । ३ । अश्रृतं श्रप्यमाणं श्रृतं चाभिमन्त्रयेत् । ४ । श्रप्यमाणे रक्षां कुर्यात् । ५ । ब्रह्मा देवानां पदवीः कवीनां ऋषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्निति दर्भान्बध्नाति । ६ । श्रृतं च तमश्नीयात्पात्रे निषिच्य । ७ । ये देवा मनोजाता मनोजुषः सुदक्षा दक्षपितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेत्यात्मनि जुहुयात् । ८ । अथाचान्तो नाभिमा-

---

XLVIII, 5. कुर्यात् and the following section up to LI, 28 कुर्याद्० is wanting in v, two leaves having been lost.

---

XLVIII, 1... अत एव यावकोपक्रमे हारीतः । अयाज्ययाजनं कृत्वा प्राश्य मूत्रपुरीषके । अप्रतिग्राह्यमादाय याजयित्वा तु निन्दितानिति स्वकृतमेव कर्माभिहितवान् । कर्मभिरयाज्ययाजनादिभिर्गुरुमात्मानं मन्येत । स्वकृतशुभाशुभकर्मणः स्वान्तरात्मसाक्षितया तत्कृतात्मगौरवलाघवैः स्वप्रत्यक्षे तज्ज्ञानं च निमित्तमत्र दर्शितम् । यद्वा तुलापुरुषकृच्छ्रोक्तप्रकारेण परात्मप्रतिकृतितोलने आत्मप्रतिकृतेर्गौरवं मन्येतेति व्याख्येयम् ।... 2... अग्नौ होमं वैश्वदेवं न कुर्यात् । न चासंस्कृतान्नभोजनदोषः ।... 4... षण्मन्त्रैर्वक्ष्यमाणैरभिमन्त्रयेत् ॥ 5... तत्र मन्त्रः ॥ 6. अनेन मन्त्रेण चरुस्थालीकण्ठे दर्भान्बध्नीयात् ।... 7. श्रृतं च चरुं पात्रान्तरे निषिच्य तमश्नीयात् । तत्र मन्त्रः ॥ 8. अनेन मन्त्रेण चरुं प्राश्नीयात् । न मन्त्रान्तरेण ।... 9. चरुप्राशनोत्तरं यथोक्तमालभेत । तत्र मन्त्रः ॥

लभेत । ९ । स्नाताः प्रीता भवत यूयमापोऽस्माकमुदरे यवाः । ता अस्मभ्यमनमीवा अयक्ष्मा अनागसः सन्तु देवीरमृता ऋतावृध इति । १० । त्रिरात्रं मेधार्थी । ११ । षड्रात्रं पापकृत् । १२ । सप्तरात्रं पीत्वा महापातकिनामन्यतमं पुनाति । १३ । द्वादशरात्रेण पूर्वपुरुषकृतमपि पापं निर्दहति । १४ । मासं पीत्वा सर्वपापानि । १५ । गोनिहारमुक्तानां यवानामेकविंशतिरात्रं च । १६ ।

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः ।
निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ॥ १७ ॥
घृतमेव मधु यवा आपो वा अमृतं यवाः ।
सर्वं पुनीत मे पापं यन्मे किंचन दुष्कृतम् ॥ १८ ॥

---

10. पीता भवन्तो C[1,2]. ता अस्ममनमीवा अयच्या ( अपच्या V[2] ) अनागसा सन्तु V[1–3]; ता अमसनमीवा अपचया अनागसा V[1,2]. ऋतावृद्ध V[1,2,4] C[1,2]. See Preface. 11. मेधावी । C[1,2]. 14. निहन्ति V[4]. 16. ॰निर्हार॰ C[1,2]. 17. घृतं V[4]; घृतं V[1–3]; स्मृतम् C[1,2] and Baudhâyana. 18. सर्वे all; सर्वं Baudh.

---

10. अनेन नाभिमालभेत । उक्तकर्मणो यथाधिकारं विनियोगमाह ॥ 11. मेधा धारणवती बुद्धिस्तदर्थी त्रिरात्रं प्राश्नीयात् ॥ 13. सप्तरात्रपानेन ब्रह्महादीनामेकं पुनाति ।... 14. द्वादशाहं पीत्वा पित्रादिकृतमपि पापं निर्दहति ।... 15... सर्वाणि महापापोपपापादीनि सर्वेषां स्वस्य पित्रादीनां च पापानि निर्दहति ।... 16. गोनिहारो गोमयं तेन सह मुक्ताः... सर्वपापानि निर्दहति ।... 17. स्मृतमित्यौशनसे ॥

वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् ।
अलक्ष्मीं कालकर्णीं च नाशयध्वं यवा मम ॥ १९ ॥
श्वसूकरावलीढं च उच्छिष्टोपहृतं च यत् ।
मातापित्रोरशुश्रूषां तत्पुनीध्वं यवा मम ॥ २० ॥
गणान्नं गणिकान्नं च शूद्रान्नं श्राद्धसूतकम् ।
चौरस्यान्नं नवश्राद्धं पुनीध्वं च यवा मम ॥ २१ ॥
बालधूर्तमधर्मं च राजद्वारकृतं च यत् ।
सुवर्णस्तैन्यमव्रात्यमयाज्यस्य च याजनम् ॥
ब्राह्मणानां परीवादं पुनीध्वं च यवा मम ॥ २२ ॥ ४८ ॥

---

मार्गशीर्षशुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमर्चयेत् । १ । पुष्पधूपानुलेपनदीपनैवेद्यैर्ब्राह्मणतर्पणैश्च । २ । व्रतमेतत्संवत्सरं कृत्वा पापेभ्यः पूतो

---

20. पुनीध्वं च $C^{1,2}$. 21. शूद्रसूतकम् । Baudh. 22 om. $C^{1,2}$. बालवृद्धम्... अव्रत्यम् Baudh.

---

19. अलक्ष्मीं कालकर्णीं च सर्वं पुनीत मे यवा इत्यौशनसे ॥ 21. श्राद्धसहितं सूतकं तथाभक्ष्यम् । सर्वं पुनीत मे यवा इत्यौशनसे ॥ 22. धूर्तमित्यत्र भावप्रधानो निर्देशः । अव्रतसमूहो अव्रात्यम् । सुवर्णस्तैन्यं महापातकोपलक्षणम् ।... परीवादो निन्दा ॥ XLIX, 3. मार्गशीर्षशुक्लद्वादशीमारभ्य कार्त्तिकशुक्लद्वादशीपर्यन्तं द्वादशस्वपि शुक्लद्वादशीषु पूर्वोक्तं व्रतं कृत्वातिपातकादिभ्यो नवविधेभ्यः पापेभ्यो मुक्तः पूतो भवति ।...

भवति । ३ । यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति । ४ । उभयपक्षद्वादशीष्वेवं संवत्सरेण स्वर्गलोकं प्राप्नोति । ५ । यावज्जीवं कृत्वा विष्णुलोकम् । ६ । एवमेव पञ्चदशीष्वपि । ७ ।

ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ।
योगभूतं परिचरन्केशवं महदाप्नुयात् ॥ ८ ॥
दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ॥ ९ ॥
तस्यां दानोपवासाद्यमक्षयं परिकीर्तितम् ।
तथैव द्वादशी शुक्ला या स्याच्छ्रवणसंयुता ॥ १० ॥ ४९ ॥

---

XLIX, 5 T. om. $V^{1-3}$. उभयपक्षद्वादशीष्वेवं संवत्सरेण $V^4$ Ap.; उभयपक्षद्वादशीष्वेकं स्वर्गलोकं $C^{1,2}$. 6. विष्णुलोकम् । $V^4$ Ap.; विष्णुकम् । $V^{1-3}$; विष्णोर्लोकमाप्नोति $C^{1,2}$: from the C.

---

4...श्वेतद्वीपं हरिवंशादिप्रसिद्धं भगवदधिष्ठानं प्राप्नोति ॥ 5. संवत्सरं यावत्कृष्णशुक्लद्वादशीष्वेवं पूर्वोक्तप्रकारकं व्रतं कृत्वा ... 6. चतुर्विंशतिद्वादशीषु यावज्जीवमुक्तव्रताचरणे विष्णुलोकं प्राप्नोति ॥ 7. एवमेव चतुर्दश्यामुपोष्य पञ्चदशीषु पौर्णमासीष्वमावास्यासु च... उक्तमेव फलमाप्नोति ॥ 8. तत्रैव पञ्चदशीव्रते यदि ... योगभूतं योगशायिनं केशवमर्चयति तदा महद्ब्रह्मरूपतामाप्नोति ।... 9, 10. यस्मिन्संवत्सरे यस्यां पौर्णमास्यां गुरुचन्द्रावेकनक्षत्र एकरात्रौ वा दिवि दृश्येते या च शुक्लद्वादशी श्रवणनक्षत्रयुक्ता भवति सोभयापि तस्मिन्संवत्सरे महतीत्युच्यते स्नानदानव्रतोपवासादेरक्षय्यहेतुत्वात् ।...

वने पर्णकुटीं कृत्वा वसेत् ।१। त्रिषवणं स्नायात् ।२। स्वकर्म चाचक्षाणो ग्रामे ग्रामे भैक्षमाचरेत् । ३ । तृणशायी च स्यात् । ४ । एतन्महाव्रतम् । ५ । ब्राह्मणं हत्वा द्वादशसंवत्सरं कुर्यात् । ६ । यागस्थं क्षत्रियं वैश्यं वा ।७। गुर्विणीं रजस्वलां वा । ८ । अत्रिगोत्रां वा नारीम् । ९ । मित्रं वा । १० । नृपतिवधे महाव्रतमेव द्विगुणं कुर्यात् । ११ । पादोनं क्षत्रियवधे । १२ । अर्धं वैश्यवधे । १३ । तदर्धं शूद्रवधे । १४। सर्वेषु शवशिरोध्वजी स्यात् । १५ । मासमेकं कृतवापनो गवानुगमनं कुर्यात् । १६ । आसीनास्वासीत । १७ । स्थितासु स्थितश्च स्यात् । १८ । सन्नां चोद्धरेत् । १९ । भयेभ्यश्च रक्षेत् । २० । तासां

L, 7. वैश्यं om. $C^{1,2}$. च $V^{4}$. 15 $C^{1,2}$ add सर्वेषु जीवेषु क्षमी स्यात् । 16. ०पावनो $C^{1,2}$. 18. स्थितः $C^{1,2}$. 19. अवसन्नां $C^{1,2}$.

L,1 ..इदानीमकामकृतेषु प्रायश्चित्तं वक्तुं पञ्चाशत्तमेन ब्रह्महत्यायां तावदाह ।... 2... त्रिकालग्रहणात्त्रिकालसंध्योपासनमपि गम्यते ।... 6. यः साक्षादकामतो ब्राह्मणं हन्ति सः...।... 7... इदं चाकामतः । कामतो द्विगुणम् ... 8... तामकामतो हत्वा... 11... इदं चाकामतः ।... 12. यागस्थनृपतिव्यतिरिक्तसद्गुणश्रोत्रियक्षत्रियवधे ... नववार्षिकव्रतं कुर्यात् ॥ 13. अदीक्षितसद्गुणवैश्यवधे... षडब्दं व्रतं कार्यम् ॥ 14. सद्गुणशूद्रवधे... त्र्यब्दं व्रतं कार्यम् । इदं चाकामतः । कामतो द्विगुणं सर्वत्र ।... 19. अनुगम्यमानासु गोषु या सन्ना पतिता पङ्कलग्ना वा तामुद्धरेत् ।... 20. सिंहव्याघ्रादिजनितेभ्यो भयेभ्यो रक्षेत् ।...

शीतादित्राणमकृत्वा नात्मनः कुर्यात् । २१ । गोमूत्रेण स्नायात् । २२ । गोरसैश्च वर्तेत । २३ । एतद्गोव्रतं गोवधे कुर्यात् । २४ । गजं हत्वा पञ्च नीलान्वृषभान्दद्यात् । २५ । तुरंगं वासः । २६ । एकहायनमनड्वाहं खरवधे । २७ । मेषाजवधे च । २८ । सुवर्णकृष्णलमुष्ट्रवधे । २९ । श्वानं हत्वा त्रिरात्रमुपवसेत् ।३०। हत्वा मूषकमार्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतममुपोषितः कृसरान्नं भोजयित्वा लोहदण्डं दक्षिणां दद्यात् । ३१ । गोधोलूककाकझषवधे त्रिरात्रमुपवसेत् । ३२ । हंसबलाकाबकमद्गुवानरश्येनभासचक्रवाकानामन्यतमं हत्वा ब्राह्मणाय गां दद्यात् । ३३ । सर्पं हत्वाभ्रीं कार्ष्णायसीम् । ३४ । षण्ढं हत्वा पलालभारकम् । ३५ । वराहं

---

21. तासां गवां शीतोष्णवातादिभ्यस्त्राणमकृत्वात्मत्राणं न कुर्यात् ।... 22. त्रिकालं गोमूत्रेण स्नायात् । स्नानं त्रिषवणं तस्येति स्मरणात् ।... 25... कामतो हत्वा... 26...इदमकामतः ।... 27... इदं कामतः ।... 28... अत्रापि कामादिव्यवस्था पूर्वैव ॥ 29. कामत उष्ट्रं हत्वा... 30... कामविषयमिदम् ।... 31. अकामतश्चेदम् ।... 32... इदं चाकामतः ।... 33. कामतश्चेदम् ।... 34. कार्ष्णायसीं लोहमयीमभ्रीं खनित्रीं सर्पवधे दद्यात् ॥ 35. षण्ढो नपुंसकः ।... अत्र जातिविशेषानुपादानेऽपि समभिव्याहारात्पशुपक्ष्यादिजातिरेव ज्ञेया । न गोब्राह्मणयोस्तयोर्लिङ्गविशेषानादरेण जातिमात्रवधनिषेधात् । षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेदिति षट्त्रिंशन्मते प्रायश्चित्तान्तरविधानाच्च । तस्माद्गोब्राह्मणव्यतिरिक्तषण्ढवधे पलालभारकं सीसमाषकं च दद्यादिति ॥

हत्वा घृतकुम्भम् । ३६ । तित्तिरिं तिलद्रोणम् । ३७ । शुकं द्विहायनं वत्सम् । ३८ । क्रौञ्चं त्रिहायणम् । ३९ । क्रव्यादमृगवधे पयस्विनीं गां दद्यात् । ४० । अक्रव्यादमृगवधे वत्सतरीम् । ४१ । अनुक्तमृगवधे त्रिरात्रं पयसा वर्तेत । ४२ । पक्षिवधे नक्ताशी स्यात् । ४३ । रूप्यमाषं वा दद्यात् । ४४ । हत्वा जलचरमुपवसेत् । ४५ ।

अस्थन्वतां तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ ४६ ॥
किंचिदेव तु विप्राय दद्यादस्थिमतां वधे ।
अनस्थ्नां चैव हिंसायां प्राणायामेण शुध्यति ॥ ४७ ॥
फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ ४८ ॥

---

46. अस्थिमताञ्च $C^{1,2}$ ( see M. XI, 141 ).

---

36...कामतश्चेदम् ।... 37... कामतश्चेदम् ।... 38...कामतश्चेदम् । अकामतः शङ्खलिखितोक्ता वत्सतरी देया ॥ 39. कामतः क्रौञ्चवधे त्रिवर्षो वत्सो देयः ।... 40...इदमकामतः ।... 41...इदं चाकामतः ।... 42...कामतश्चेदम् ।... 43. येषां पक्षिणां वधे प्रायश्चित्तं नोक्तं तत्र नक्ताशी स्यात् । तत्राशक्तावाह ॥ 45. जलचरा मत्स्यादयः । अकामतः सकृद्वधे चेदम् ।...46. अस्थन्वतां सास्थ्नां सत्त्वानां प्राणिनां कृकलासादीनाम्... 47... एकैकवधेऽप्येतदेव... 48. फलदा वृक्षाः पनसाम्रादयः । गुल्मादयः पूर्वोक्ताः । पुष्पिता वीरुधो मालत्यादयः । तेषां छेदने ऋचो गायत्र्याः शतं जप्यम् । अकामतश्चेदम् ।...

अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः ।
फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥ ४९ ॥
कृष्टजानामौषधीनां जातानां च स्वयं वने ।
वृथालम्भे तु गच्छेद्गां दिनमेकं पयोव्रतः ॥५०॥ ५० ॥

---

सुरापः सर्वकर्मवर्जितः कणान्वर्षमश्नीयात् । १ । मलानां मद्यानां चान्यतमस्य प्राशने चान्द्रायणं कुर्यात् । २ । लशुनपलाण्डुगृञ्जनैतद्गन्धिविड्वराहग्रामकुक्कुटवानरगोमांसभक्षणे च । ३ । सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्यात् । ४ । वपनमेखलादण्डभैक्षचर्याव्रतानि पुनःसंस्कारकर्मणि वर्जनीयानि । ५ । शशकशल्यकगोधाखड्गकूर्मवर्जं पञ्चनखमांसाशने सप्त-

---

49. अन्नजानां C[1,2]. See M. XI, 144.

---

49. अन्नमोदनादि । आद्यं मोदकादि । रसा गुडादयः ।... सर्वशःशब्देन जलादिजातानामपि वध एतदेव । अकामतश्चेदम् ।... 50. कृष्टजा यवव्रीह्यादयः । वने स्वयमेवाकृष्टजा नीवारादयः ।... LI, 1... सर्वैः संध्यावन्दनसहितैर्यजनयाजनादिकर्मभिर्वर्जितः सन् ... 2...मद्यानि मधूकादीनि पूर्वोक्तानि दश द्वादशेति तालमैरारिष्टानामप्युपलक्षणम् ।... 3...एतेषामिव गन्धो यस्य तत्कन्दादिदलादिः ।...इदं च ग्रामवासिपक्षिमात्रोपलक्षणम् । सर्वाश्च ग्रामवासिन इति योगिस्मरणात् ( Y. I, 172 ) ।... कामतश्चेदम् ।... 5. पुनःसंस्कारेषूपनयने क्रियमाणे वपनादीनि व्रतानि ब्रह्मचर्यादिधर्मा अगन्धमाल्यादिवर्जनादयः ।...

रात्रमुपवसेत् । ६ । गणगणिकास्तेनगायनान्नानि भुक्त्वा सप्तरात्रं पयसा वर्तेत । ७ । तक्षकान्नं चर्मकर्तुश्च । ८ । वार्धुषिककदर्यदीक्षितबन्धनिकाभिशस्तषण्ढानां च । ९ । पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोग्रोच्छिष्टभोजिनां च । १० । अवीरास्त्रीसुवर्णकारसपत्नपतितानां च ।११। पिशुनानृतवादिक्षतधर्मात्मरसविक्रयिणां च । १२ । शैलूषतन्तुवायकृतघ्नरजकानां च । १३ । कर्मकारनिषादरङ्गावतारिवेणशस्त्रविक्रयिणां च । १४ । श्वजीविशौण्डिकतैलिकचैलनिर्णेजकानां च । १५ । रजस्वलासहोपपतिवेश्मनां च । १६ । भ्रूणघ्नावेक्षितमुदक्यासंस्पृष्टं पतत्रिणावलीढं शुना संस्पृष्टं गवा घ्रातं च । १७ । कामतः पदा स्पृष्टमवक्षुतम् । १८ । मत्तक्रुद्धातु-

---

LI, 9. ०बन्धनिका० $V^4$; ०बद्धनिगडा० $V^{1-3}$ $C^{1,2}$ N. See Gautama XVII, 17. 18. कामतो यदा संस्पृष्टम० $C^{1,2}$.

---

6...अकामतश्चेदम् ।... 9...बद्धो रज्ज्वादिना निगडः शृङ्खला सास्यास्तीति ।... 10. क्रूरो दृढकोपः । उग्रो वाक्कायाभ्यामुद्वेजकः ।... 11...सपत्नः शत्रुः ।... 12. पिशुनः सूचकः ।...क्षतधर्मो विधिनिषेधातीतः ।... 13... रजको वस्त्ररागकृत् ॥ 14...निषादो मत्स्याघातजीवी । रङ्गावतारी मल्लादिः । वेणो वेणुच्छेदजीवी प्रतिलोमजः ।... 15. श्वजीवी कुक्कुरपोषणवृत्तिः ।... 16. रजस्वलोदक्या तत्स्वामिकं तदर्थं पक्वं च । उपपतिना जारेण सह वर्तमानं वेश्म यस्यासौ सहोपपतिवेश्मा स्वगृहे स्थितजारः ।... 17. भ्रूणघ्नो ब्रह्मगर्भहा तेन चावेक्षितम् ।...

राणां च । १९ । अनर्चितं वृथामांसं च । २० । पाठीनरोहितराजीवसिंहतुण्डशकुलवर्जं सर्वमत्स्यमांसाशने त्रिरात्रमुपवसेत् । २१ । सर्वजलजमांसाशने च । २२ । अपः सुराभाण्डस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत् । २३ । मद्यभाण्डस्थाश्च पञ्चरात्रम् । २४ । सोमपः सुरापस्याघ्राय गन्धमुदकमग्नस्त्रिरघमर्षणं जप्त्वा घृतप्राशनमाचरेत् । २५ । खरोष्ट्रकाकमांसाशने चान्द्रायणं कुर्यात् ।२६। प्राश्याज्ञातं सूनास्थं शुष्कमांसं च ।२७। क्रव्यादमृगपक्षिमांसाशने तप्तकृच्छ्रम् । २८ । कलविङ्कप्लवचक्रवाकहंसरज्जुदालसारसदात्यूहशुकसारिकाबलाकाबककोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत् । २९ ।

---

25. घृतप्राशनो भवेत् C[1,2].

---

20. अर्चा गायत्र्या प्रोक्षणादिक्रिया तद्रहितम् । वृथा देवतातिथ्यर्थं विना साधितं मांसम् ।... 21...अकामतश्चेदम् ।... 22. जलजा नक्रशिशुमारादयः ।... 23... कामतश्चेदम् ।... 24... कामतश्चेदम् ।... 25... अघमर्षणं प्राणायामोपलक्षणम् । कामतो द्विगुणम् ।... 26... कामतश्चेदम् ।... 27. भक्ष्याभक्ष्यत्वेनाज्ञातपशुपक्षिसंबन्धि मांसमज्ञातम् ।... न तु दुष्टसंपर्कादिदोषदूषितत्वेनाज्ञातम् ।... इदं च कामतोऽत्यन्ताभ्यासे... 28... क्रव्यादास्ते च ते मृगपक्षिणश्चेति । मृगा व्याघ्रादयः । पक्षिणः श्येनादयः ।... अकामतश्चेदम् ।... 29. रज्जुदालो वृक्षकुक्कुटः । सारसो लक्ष्मणः । दात्यूहः कालकण्टकः काकावान्तरजातिः ।... कामतश्चेदमकामतोऽभक्ष्यपक्षिप्रक्रमे ( Su. ३१ )

एकशफोभयदन्ताशने च । ३० । तित्तिरिकपिञ्जललावकवर्तिकामयूरवर्जं सर्वपक्षिमांसाशने चाहोरात्रम् । ३१ । कीटाशने दिनमेकं ब्रह्मसुवर्चलां पिबेत् । ३२ । शुनां मांसाशने च । ३३ । छत्राककवकाशने सांतपनम् । ३४ । यवगोधूमपयोविकारं स्नेहाक्तं शुक्तं खाण्डवं च वर्जयित्वा पर्युषितं तत्प्राश्योपवसेत् । ३५ । ब्रश्चनामेध्यप्रभवांल्लोहितांश्च वृक्षनिर्यासान् ।३६। शाल्ककवृथाकृसरसंयावपायसापूपशाष्कुलीदेवान्नानि हवींषि च । ३७ । गोऽजामहिषीवर्जं सर्वपयांसि च । ३८ । अनिर्दशाहानि तान्यपि । ३९ । स्यन्दिनीसंधिनीवि-

31. ०कपिञ्जल० $V^4$v Ap; ०कापिञ्जल० $V^{1-3}$ $C^{1,2}$.

---

30. एकशफा अश्वादयः । उभयतोदन्ता रोहितादयः ।... इदं चाकामतः ।... 31... अकामतश्चेदम् ।... 32. कीटाः पिपीलिकादयः ।... एतच्च कामतः ।... 33... अकामतश्चेदम् ।... 34... इदं चाकामतः ।... 35. यवविकारः पोलिकादिः । गोधूमविकारो मण्डकादिः । पयोविकारोऽन्नामिक्षादिः । स्नेहेन घृतादिना अक्तमोदनादि ।... एतच्चाकामतः ।... 36... अमेध्यं विष्ठादि । तत्प्रभवान्तण्डुलीपङ्कादीन् ।... तद्भक्षणे चैकाहोपवासः । कामाकामादिव्यवस्था पूर्ववं ।... 37... कृसरं तिलैर्मुद्गैर्वा मिश्र ओदनः ।...पायसं परमान्नम् । अपूपो मण्डकः । शष्कुली स्नेहपक्वो गोधूमविकारः । सोहारीति मध्यदेशभाषायाम् । देवार्थं कृतमन्नमेतानि वृथा देवाद्यनिवेदितानि । हविर्होमार्थं कृतमहुतम् । एषां चाशनेऽहोरात्रोपवासः । व्यवस्था च पूर्ववं ।... 38... पयोनिषेधात्तद्विकाराणां दध्यादीनामपि निषेधात्तद्भक्षणेऽपीदमेव प्रायश्चित्तम् ।... 41. अमेध्यं विष्ठादि तद्भुजश्च गोः क्षीरं भुक्त्वैकाहोपवासः ।

वत्साक्षीरं च ।४०। अमेध्यभुजश्च ।४१। दधिवर्ज्जं केवलानि च शुक्तानि ।४२। ब्रह्मचर्याश्रमी श्राद्धभोजने त्रिरात्रमुपवसेत् ।४३। दिनमेकं चोदके वसेत् ।४४। मधुमांसाशने प्राजापत्यम् ।४५। विडालकाकनकुलाखूच्छिष्टभक्षणे ब्रह्मसुवर्चलां पिबेत् ।४६। श्वोच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत् ।४७। पञ्चनखविण्मूत्राशने सप्तरात्रम् ।४८। आमश्राद्धाशने त्रिरात्रं पयसा वर्तेत ।४९। ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रम् ।५०। वैश्योच्छिष्टाशने पञ्चरात्रम् ।५१। राजन्योच्छिष्टाशने त्रिरात्रम् ।५२। ब्राह्मणोच्छिष्टाशने त्वेकाहम् ।५३। राजन्यः शूद्रोच्छिष्टाशी पञ्चरात्रम् ।५४। वैश्योच्छिष्टाशी त्रिरात्रम् ।५५। वैश्यः

---

46. स्वोच्छिष्टाशने C[1,2].

---

42... कालेनाम्लीभूतानि शुक्तानि दधिव्यतिरिक्तानि भुक्त्वैकाहोपवासः।... दधिग्रहणं तद्विकाराणामप्युपलक्षणम्। 43... अकामतश्चेदम्।... 45. ब्रह्मचारी मधुमांसाशने प्राजापत्यं कुर्यात्। श्राद्धेऽश्राद्धे च।... 46... इदं चाकामतः सकृद्भक्षणे।... 47... अकामतश्चेदम्।... 48. मानुषातिरिक्तं पञ्चनखविण्मूत्राशने सप्ताहोपोषितोऽष्टमेऽह्नि पञ्चगव्यं पिबेत्। कामतश्चेदम्। 49. ब्रह्मचार्यतिरिक्तस्यामश्राद्धाशने त्र्यहं पयःपानम्। इदं चाकामतः।...

च्छिष्टाशी च । ५६ । चण्डालान्नं भुक्त्वा त्रिरात्र-
सेत् । ५७ । सिद्धं भुक्त्वा पराकः ॥ ५८ ॥
ंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः कथं च न ।
न्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥५९॥
ान्ति पशुरोमाणि तावत्कृत्वेह मारणम् ।
ापशुघ्नः प्राप्नोति प्रेत्य चेह च निष्कृतिम् ॥६०॥
ार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
ो हि भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥६१॥
तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।
ृशं भवति प्रेत्य वृथामांसानि खादतः ॥ ६२ ॥
षध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
ार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ ६३ ॥
ुपर्के च यज्ञे च पितृदैवतकर्मणि ।
ैव पशवो हिंस्या नान्यत्रेति कथं च न ॥ ६४ ॥

---

7. चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव
वाततायिन इत्येते चण्डालग्रहणेन गृह्यन्ते ।... एतच्च कामतः ।...
अकामतश्चेदम् ।... 59... शाश्वतं वैदिकम्... 60. पशुघ्न इह-
था अश्रौतस्मार्तपशुयागादिमन्तरेण पशुमारणं कृत्वा पशुरोमसम-
ने दिनानीहलोके परलोके च निष्कृतिं दुःखानुभवनरकोपभोगरूपां
। ... 63. ओषध्यः पुरोडाशार्थं व्रीहियवादयः । ... उत्कृष्टं
दियोनित्वं परलोकं पुनः पुनः प्राप्नुवन्ति ॥

यज्ञार्थेषु पशून्हिंसन्वेदतत्त्वार्थविद्द्विजः ।
आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥ ६५ ॥
गृहे गुरावरण्ये वा निवसन्नात्मवान्द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ ६६ ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥ ६७ ॥
योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥६८॥
यो बन्धनवधक्लेशान्प्राणिनां न चिकीर्षति ।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥६९॥
यद्ध्यायति यत्कुरुते रतिं बध्नाति यत्र च ।
तदेवाप्नोत्ययत्नेन यो हिनस्ति न किं च न ॥७०॥
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥७१॥
समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥७२॥
न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥७३॥

---

65. यो...वेदविहितयज्ञार्थं न तु भक्षणार्थं पशून्हिनस्ति... 69. यः प्राणिनां वधबन्धादिक्लेशान्न चिकीर्षति स सर्वेषामपि हितप्रेप्सुत्वादात्यन्तिकसुखभाग्भवति । 73. पिशाचा ह्यविधिनैव मांसं भक्षयन्ति ।...

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥७४॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन्देवान्न ततोऽन्योऽस्त्यपुण्यकृत् ॥७५॥
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तस्य पुण्यफलं समम् ॥७६॥
फलमूलाशनैर्दिव्यैर्मुन्यन्नानां च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥७७॥
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥७८॥५१॥

---

सुवर्णस्तेयकृद्राज्ञे कर्माचक्षाणो मुसलमर्पयेत् । १ । वधात्त्यागाद्वा प्रयतो भवति । २ । महाव्रतं द्वादशाब्दानि वा कुर्यात् । ३ । निक्षेपापहारी च । ४ । धान्यधनापहारी च कृच्छ्रमब्दम् । ५ । मनुष्यस्त्रीकूपक्षेत्र-

---

75. देवांस्ततोऽन्यो नास्त्यपुण्यकृत् ॥ $C^{1,2}$ ( and M. V, 52 ).

---

77. दिव्यैः स्वर्गसाधनैः फलमूलनीवारादिभोजनैस्तादृशी स्वर्गप्राप्तिर्नास्ति यादृशी मांसवर्जनेन ॥ LII, 1... तच्च ब्राह्मणस्वामिकमेव ।... 3. अकामतः सुवर्णस्तेय आह ॥ 4... तस्य कामतोऽपहारी ।... 5... चकारात्सिद्धान्नं च ब्राह्मणस्वमेतदपहृत्याब्दं कृच्छ्रं चरेत् । एतच्च कामतः ।... 6. मनुष्यो दासः । स्त्री दासी । शेषं प्रसिद्धम् । एषां क्षत्रियादिस्वामि-

वापीनामपहारे चान्द्रायणम् । ६ । द्रव्याणामल्पसाराणां सांतपनम् । ७ । भक्ष्यभोज्यपानशय्यासनपुष्पमूलफलानां पञ्चगव्यपानम् । ८ । तृणकाष्ठद्रुमशुष्कान्नगुडवस्त्रचर्मामिषाणां त्रिरात्रमुपवसेत् । ९ । मणिमुक्ताप्रवालताम्ररजतायःकांस्यानां द्वादशाहं कणानश्नीयात् । १० । कार्पासकीटजोर्णाद्यपहरणे त्रिरात्रं पयसा वर्तेत । ११ । द्विशफैकशफापहरणे त्रिरात्रमुपवसेत् ।१२। पक्षिगन्धौषधिरज्जुवैदलानामपहरणे दिनमुपवसेत् । १३ ।

दत्त्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः ।
प्रायश्चित्तं ततः कुर्यात्कल्मषस्यापनुत्तये ॥ १४ ॥
यद्यत्परेभ्यस्त्वादद्यात्पुरुषस्तु निरङ्कुशः ।
तेन तेन विहीनः स्याद्यत्र यत्राभिजायते ॥ १५ ॥

---

LII, 8. ०यान० C[1,2]v ( and M. XI, 160 ). 12. ०शफहरणे C[1,2]v.

---

कानामपकृष्टजातीयानामपहारे चान्द्रायणम् ।... वापीकूपयोर्न स्वरूपेण हरणम्...किंतु जलवतामेव । वापीकूपजलानां च शुद्धिश्चान्द्रायणं स्मृतमिति मानवात् ( M. XI, 164 ) ।... 7. अल्पसाराण्यल्पमूल्यानि त्रपुसीसादीनि ।... पञ्चविंशतिपणलभ्यविषयमेतत् ।... 8. भक्ष्यं मोदकादि । भोज्यमोदनादि । पानं दुग्धादि ।... 10... कामतश्चेदम् ।... 11... आदिशब्दात्क्षुमादितन्तवः ।... इदं च पादकृच्छ्रतुल्यत्वादकामतः ।... 14. धनस्वामिनेऽपहृतं द्रव्यं साक्षादेव दत्त्वा लज्जादिना साक्षाद्दानाशक्तावुपायान्तरेण यौतकादिमिषेणापि दत्त्वा प्रायश्चित्तं कार्यम् ।... 15. रागाभिभवेन निषेधमतिक्रम्य यद्यद्द्रव्यमपहरति...

जीवितं धर्मकामौ च धने यस्मात्प्रतिष्ठितौ ।
तस्मात्सर्वप्रयत्नेन धनहिंसां विवर्जयेत् ॥ १६ ॥
प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा ।
महद्दुःखमवाप्नोति धनहिंसापरस्तयोः ॥१७॥ ५२ ॥

---

अथागम्यागमने महाव्रतविधानेनाब्दं चीरवासा वने प्राजापत्यं कुर्यात् । १ । परदारगमने च । २ । गोव्रतं गोगमने च । ३ । पुंस्ययोनावाकाशेऽप्सु दिवा गोयाने च सवासाः स्नानमाचरेत् । ४ । चण्डालीगमने तत्साम्यमाप्नुयात् । ५ । अज्ञानतश्चान्द्रायणद्वयं कुर्यात् । ६ । पशुवेश्यागमने च प्राजापत्यम् । ७ । सकृद्दुष्टा स्त्री यत्पुरुषस्य परदारे तद्व्रतं कुर्यात् । ८ ।

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः ।
तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥९॥ ५३ ॥

---

15. परेभ्य आदद्यात् C[1,2]v. LIII, 7. च om. C[1,2].

---

LIII, 1... तत्रागम्या शूद्रा पितृभार्या । तस्यामकामतो गमने... 2... गुरुतल्पतत्समव्यतिरिक्तस्वस्वजातिपरदारगमनेऽपि... 3... आकाशेऽन्तरिक्षे करव्यापारादिना । अप्सु जलमध्ये ।... 5. कामतश्चण्डालीगमन आह ।... 7. पशवोऽश्वादयः ।... कामतश्चेदम् ।... 8. सकृदेकवारं व्यभिचारिता स्त्री... 9... भैक्षं भुञ्जानो गायत्रीं जपन् ...

यः पापात्मा येन सह संयुज्यते स तस्यैव प्रायश्चित्तं कुर्यात् । १ । मृतपञ्चनखात्कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् । २ । द्व्यहं राजन्यः । ३ । एकाहं वैश्यः । ४ । शूद्रो नक्तम् । ५ । सर्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः । ६ ।

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।
उभौ तौ नरकं यातो महारौरवसंज्ञितम् ॥ ७ ॥

पर्वानारोग्यवर्जमृतावगच्छन्पत्नीं त्रिरात्रमुपवसेत् । ८ । कूटसाक्षी ब्रह्महत्याव्रतं चरेत् । ९ । अनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृतिहोमश्च । १० । सूर्याभ्युदितनिर्मुक्तः सचैलस्नातः सावित्र्यष्टशतमावर्तयेत् । ११ । श्वशृगालविड्वराहखरवानरवायसपुंश्चलीभिर्दष्टः स्रवन्तीमासाद्य षोडश प्राणायामान्कुर्यात् । १२ । वेदाग्न्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्षेण वर्तेत ।१३। समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे

---

LIV, 7. यातौ V⁴. 12. षोडश om. V⁴.

---

LIV, 6. सर्वे त्रैवर्णिका उक्तव्रतान्ते पञ्चगव्यं पिबेयुर्न शूद्रस्तस्य वक्ष्यमाणतन्निषेधात् ।... 10... अकामतश्चेदम् ।... 12... नदीं गत्वा तत्र स्नात्वा जले षोडश प्राणायामान्कुर्यात् ।... 13. वेदोत्साद्यधीतवेदविस्मर्ता । अग्न्युत्साद्याहितानामग्नीनां श्रौतस्मार्तानां त्यक्ता ।...

तदाक्षेपणे च मासं पयसा वर्तेत । १४ । नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नश्चैते संवत्सरं भैक्षेण वर्तेरन् । १५ । परिवित्तिः परिवेत्ता यया च परिविद्यते दाता याजकश्च चान्द्रायणं कुर्यात् । १६ । प्राणिभूपुण्यसोमविक्रयी तप्तकृच्छ्रम् । १७ । आर्द्रौषधिगन्धपुष्पफलमूलचर्मवेत्रविदलतुषकपालकेश-भस्मास्थिगोरसपिण्याकतिलतैलविक्रयी प्राजापत्यम् । १८ । श्लेष्मजतुमधूच्छिष्टशङ्खशुक्तित्रपुसीसकृष्णलोहौ-दुम्बरखड्गपात्रविक्रयी चान्द्रायणं कुर्यात् । १९ । रक्त-वस्त्ररङ्गरत्नगन्धगुडमधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत् । २० । मांसलवणलाक्षाक्षीरविक्रयी चान्द्रायणं कुर्यात्

16. या च परिविद्यते V[1–3] C[1]v; या च परिवेत्ता या च परिविद्यते C[2]. 17. ०लोमविक्रयी C[2]. C[1,2] Ap. add कुर्यात् at the end. 18. ०वैदल० C[1,2].

---

15. नास्तिकवृत्तिर्बाह्याचारोपजीवी । नास्तिकेभ्यो वृत्तिर्जीवनं यस्येति वा ।... कूटव्यवहारी कूटेन कपटेन तुलामानादिकृतेन क्रयविक्रयकर्ता । ब्राह्मणवृत्तिघ्नो राजादिदत्तशासनाद्यपहर्ता । 16. परिवित्त्यादयः पञ्चापि चान्द्रायणं कुर्युः ।... 17. प्राणिनो गोमनुष्यादयः ।... पुण्यं यागादिजन्यो धर्मः ।... 18. आर्द्रमार्द्रकम् । ओषध्यो यवव्रीह्यादयः ।... विदलं...शूर्प-व्यजनादि ।... गोरसो क्षीरदध्यादिः । 19. श्लेष्माणि श्लेष्मातकफलानि । जतु लाक्षा । कृष्णलोहमायसम् । औदुम्बरं ताम्रम् । खड्गपात्रं खड्ग-शृङ्गमयं पात्रं पितृतर्पणसाध्यम् ।... 20. रक्तवस्त्रमञ्जिष्ठादिरञ्जितम् । रङ्गं धातुविशेषः ।... रसा गुडलवणादिव्यतिरिक्तास्तिक्तकटुकादयः ।...

।२१। तं च भूयश्चोपनयेत् ।२२। उष्ट्रेण खरेण वा गत्वा नग्नः स्नात्वा सुप्त्वा भुक्त्वा प्राणायामत्रयं कुर्यात् ।२३।

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥२४॥
अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥२५॥
येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥२६॥
प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ।
ब्राह्मण्याच्च परित्यक्तास्तेषामप्येतदादिशेत् ॥२७॥
यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा ॥ २८ ॥
वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २९ ॥

---

22. तं प्राण्याद्यपण्यविक्रयिणम्... 23...इदं च कामतोऽकामतस्तु स्नानमेव।... 25. अयाज्या याजनानर्हाः। ते च द्विविधा जात्या शूद्रप्रतिलोमादयः कर्मणा पातित्योपपातकादियुक्ताः।... अभिचारः परमरणाद्यर्थो दृष्टोपायः। श्येनयागादिः।... 26... त्रीन्प्राजापत्यांश्चारयित्वा यथाविध्युपनाययेत्।... यत्किंचिदुपनयनाङ्गहानेऽप्येतदेव नानूच्येत यथाविधीति सामान्येनाभिधानात्।... 28. गर्हितेन शास्त्रनिषिद्धेन क्षत्रादिकर्मणा...गर्हितपदोपादानान्निषिद्धप्रतिग्रहादावप्येतदेव ज्ञेयम्।... 29. वेदः स्मृत्युपलक्षणः। तेन श्रौतस्मार्तसंध्यास्नानादिनित्यकर्मलोपे...

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥३०॥
एनस्विभिरनिर्णिक्तैर्नार्थं कंचित्समाचरेत् ।
कृतनिर्णेजनांश्चैतान्न जुगुप्सेत धर्मवित् ॥ ३१ ॥
बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ ३२ ॥
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥३३॥
अनुक्तनिष्कृतीनां तु पापानामपनुत्तये ।
शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत् ॥३४॥५४॥

---

अथ रहस्यप्रायश्चित्तानि भवन्ति । १ । स्रवन्तीमासाद्य स्नातः प्रत्यहं षोडश प्राणायामान्कृत्वैककालं हविष्याशी मासेन ब्रह्महा पूतो भवति । २ । कर्मणो-

---

LV, 2. प्राणायामान्सलक्षणान्कृत्वै० V⁴. सलक्षणान् from the C.

---

30. विप्रजिघांसया दण्डाद्युद्यमोऽवगूरणम् । तत्कृत्वा कृच्छ्रं प्राजापत्यम् ।... 32... न संवसेन्न व्यवहरेदिति वाचनिकोऽयं निषेधः ।... LV, 1. द्विविधं पापं प्रकाशं रहस्यं च । प्रकाशं लोकविदितं रहस्यं कर्तृमात्रज्ञातम् ।... 2. स्रवन्ती नदी तामासाद्य गत्वा तत्र स्नात्वा मासं प्रत्यहं षोडश प्राणायामान्सलक्षणान्कृत्वैकवारमेव हविष्यभुग्ब्रह्महा शुध्यति ।... 3. उक्तस्य कर्मणः समाप्तौ

ऽन्ते पयस्विनीं गां दद्यात् । ३ । व्रतेनाघमर्षणेन च सुरापः पूतो भवति । ४ । गायत्रीदशसाहस्रजपेन सुवर्णस्तेयकृत् । ५ । त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः । ६ ।

यथाश्वमेधः क्रतुराट् सर्वपापापनोदकः ।
तथाघमर्षणं सूक्तं सर्वपापापनोदकम् ॥ ७ ॥
प्राणायामं द्विजः कुर्यात्सर्वपापापनुत्तये ।
दह्यन्ते सर्वपापानि प्राणायामैर्द्विजस्य तु ॥ ८ ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ९ ॥
अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥ १० ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ११ ॥
एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् ।
संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ १२ ॥

---

5. ०सहस्र० V[1,3]. 7. ०नोदनः । and ०नोदनम् ॥ C[1,2] ( and M. XI, 261 ). 12. वेदविदुषो C[1,2]v.

---

4. व्रतेन स्रवन्तीमासाद्येत्यादिना मासेनेत्यन्तेन ।... प्राणायामस्थानेऽत्राघमर्षणम् ।... 5. व्रतेनेत्यत्रापि संबध्यते ।... 6...षोडशर्चेन तेनैव हुत्वा गुरुतल्पगः पूयते ।... 12. एतत्... जपन्विप्रोऽनधीतवेदोऽपि वेदविद्भवति ।...

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ १३ ॥
एतत्त्रयविसंयुक्तः काले च क्रियया स्वया ।
विप्रक्षत्रियविड्जातिर्गर्हणां याति साधुषु ॥ १४ ॥
ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥ १५ ॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ १६ ॥
एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः ।
सावित्र्यास्तु परं नान्यन्मौनात्सत्यं विशिष्यते ॥ १७ ॥
क्षरन्ति सर्ववैदिक्यो जुहोतियजतिक्रियाः ।
अक्षरं त्वक्षरं ज्ञेयं ब्रह्मा चैव प्रजापतिः ॥ १८ ॥

---

14. गर्हणं C[1,2]. See M. II, 80. 15. विज्ञेया V[4]. 17. परं नास्ति C[1,2]v ( and M. II, 83 ).

---

14. यस्त्रैवर्णिको गायत्र्यादिकं न जानाति जानन्नपि वा संध्याकाले स्वां क्रियां गायत्रीजपरूपां न करोति स साधुषु वैदिकेषु गर्हणां निन्दां प्राप्नोति ।... 16. यो वर्षत्रयं... प्रत्यहं प्रणवेन व्याहृतिपूर्विकां गायत्रीं सहस्रकृत्वो जपति स वायुभूतो दृश्यरूपरहितः कामचारी खमूर्तिमानाकाशवन्निर्लेपो लिङ्गशरीरनाशेन शुद्धस्वरूपः... परं ब्रह्माभ्येति ॥ 18. श्रुतिस्मृतिविहिता यागदानहोमजपादिक्रियाः ।...

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ १९ ॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ २० ॥
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ २१ ॥ ५५ ॥

---

अथातः सर्ववेदपवित्राणि भवन्ति । १ । येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते । २ । अघमर्षणम् । ३ । देवकृतम् । ४ । शुद्धवत्यः । ५ । तरत्समंदीयम् । ६ । कूष्माण्ड्यः । ७ । पावमान्यः । ८ । दुर्गासावित्री । ९ । अतीषङ्गाः । १० । पदस्तोभाः । ११ । सामानि व्याहृतयः । १२ । भारुण्डानि । १३ । चन्द्रसाम । १४ । पुरु-

---

19. सहस्रो all and N. See M. II, 85.

---

19....विधियज्ञो ज्योतिष्टोमादिः... 21... मैत्री स्वाभाविकः प्राणिमात्रे ऽद्वेषस्तद्वान्ब्राह्मणः ।... श्रौतस्मार्तयज्ञार्थपशुबीजाद्यहिंसत्वेनैव ब्राह्मणो ब्रह्मसंबन्धीत्युच्यते ॥ LVI, 4. देवकृतस्यैनसो ऽवयजनमसीत्याद्यो मन्त्राः ॥ 9. जातवेदसे सुनवाम सोममित्येषा ऋक् ॥ 14. अत्राह गोरमन्वतेत्यस्यामृचि गीयमानं साम ॥

षव्रते सामनी । १५ । अब्लिङ्गम् । १६ । बार्हस्पत्यम् । १७ । गोसूक्तम् । १८ । आश्वसूक्तम् । १९ । सामनी चन्द्रसूक्ते च । २० । शतरुद्रियम् । २१ । अथर्वशिरः । २२ । त्रिसुपर्णम् । २३ । महाव्रतम् । २४ । नारायणीयम् । २५ । पुरुषसूक्तं च । २६ ।

त्रीण्याज्यदोहानि रथन्तरं च
अग्निव्रतं वामदेव्यं बृहच्च ।
एतानि गीतानि पुनन्ति जन्तू-
ञ्जातिस्मरत्वं लभते यदीच्छेत् ॥ २७ ॥ ५६ ॥

---

अथ त्याज्याः । १ । व्रात्याः । २ । पतिताः । ३ । त्रिपुरुषं मातृतः पितृतश्चाशुद्धाः । ४ । सर्व एवाभोज्याश्चाप्रतिग्राह्याः । ५ । अप्रतिग्राह्येभ्यश्च प्रतिग्रहप्रसङ्गं वर्ज-

---

LVI, 15, 16. पुरुषव्रते सामनी । V[2]; पुरुषव्रते । भासम् । C[1,2]; पुरुषव्रते । भासमच्छिद्रं v; पुरुषव्रते भासमब्लिङ्गम् Ap. 20. चन्द्रशुद्धे V[1–3] V[4] in mg. ( इन्द्रशुद्धे Vasishṭha XXVIII, 14 ). 27. य इच्छेत् ॥ C[1,2]v Ap See Vas. XXVIII, 15.

---

15. सहस्रशीर्षा पुरुषः त्रिपादूर्ध्व उदैदित्येतयोर्गीयमाने सामनी ॥ 16. आपो हि ष्ठेत्यृचि गीयमानम् ॥ 18. यदिन्द्राहं यथा त्वमस्यामृचि गीयमानं साम ॥ 19. इदमपि तस्यामेव गीयमानं साम ॥ 20. एतो न्विन्द्रं स्तवामेत्यस्यामृचि गीयमानम् ।... 21. नमस्ते रुद्र मन्यव इत्येकादशानुवाकास्तैत्तिरीयप्रसिद्धाः ॥ 23. ब्रह्म मेतु मां मधु मेतु मामित्याद्यनुवाकत्रयं तैत्तिरीयप्रसिद्धम् ॥ 24. सोमं राजानमित्यस्यां गीयमानं साम ॥

येत् । ६ । प्रतिग्रहेण ब्राह्मणानां ब्राह्मयं तेजः प्रणश्यति । ७ । द्रव्याणां वाविज्ञाय प्रतिग्रहविधिं यः प्रतिग्रहं कुर्यात्स दात्रा सह निमज्जति । ८ । प्रतिग्रहसमर्थश्च यः प्रतिग्रहं वर्जयेत्स दातृलोकमाप्नोति । ९ । एधोदककमूलफलाभयामिषमधुशय्यासनगृहपुष्पदधिशाकांश्चाभ्युद्यतान्न निर्णुदेत् । १० ।

आहूयाभ्युद्यतां भिक्षां पुरस्तादनुचोदिताम् ।
ग्राह्यां प्रजापतिर्मेने अपि दुष्कृतकर्मणः ॥ ११ ॥
नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ १२ ॥
गुरून्भृत्यानुज्जिहीर्षुरर्चिष्यन्पितृदेवताः ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ १३ ॥
एतेष्वपि च कार्येषु समर्थस्तत्प्रतिग्रहे ।
नादद्यात्कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ १४ ॥

---

LVII, 8. ब्राह्मं C[1,2]v; ब्राह्ममिति पाठे N. See M. IV, 186. 12. पञ्च–ie. from ... to LIX, 30. प्रयाति om. v.

---

LVII, 5. त्यक्ताः सर्वे ऽप्यभोज्या... 6. अप्रतिग्राह्याः पूर्वोक्तास्तेभ्यः प्रतिग्रहाभ्यासो न कार्यः।... 7. ब्राह्मं ब्रह्मलोकार्हम् ।... 9. प्रतिग्रहे सामर्थ्यं तपोविद्याचारान्तद्वानपि ।... 11. गृहाण भोरिमां भिक्षामित्याहूय पुरस्तादानीतां दुष्कृतकर्मणो यथोक्तसंध्याद्यकारिणो ऽपि न तु पतितादेः प्रजापतिर्ग्राह्यामाह ॥ 13. गुरवो मातृपित्रादयः । भृत्या भार्यादयः । तानापद्गतानुज्जिहीर्षुर्मोचयिषुः ।... 14. एतेषु पूर्वोक्तेषु मातृपितृभरणादिष्वपि कर्तव्येषु...

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।
आत्मनो वृत्तिमन्विच्छन्गृह्णीयात्साधुतः सदा ॥ १५ ॥
अर्धिकः कुलमित्रं च दासगोपालनापिताः।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥१६॥५७॥

---

अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति। १। शुक्लः शबलोऽसितश्च। २। शुक्लेनार्थेन यदौर्ध्वदेहिकं करोति तेनास्य देवत्वमासादयति। ३। यच्छबलेन तन्मानुष्यम्। ४। यत्कृष्णेन तत्तिर्यक्त्वम्। ५। स्ववृत्त्युपार्जितं सर्वेषां शुक्लम्। ६। अनन्तरवृत्त्युपात्तं शबलम्। ७। एकान्तरवृत्त्युपात्तं च कृष्णम्। ८।
क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया।
अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥ ९ ॥

LVIII, 2. ०सितश्चार्थः। $C^{1,2}$. 3. यदैहिकं करोति तद्देवमासादयति $C^{1,2}$. 5. तत्० om. $V^4$. 6. सर्वं सर्वेषां $C^{1,2}$. 8. अन्तरितवृत्त्युपात्तं $C^{1,2}$. 9. प्रीतिदायं $V^{1-4}$ $C^{1,2}$; ०दायः Nârada 3, 53.

15. गुरुषु पूर्वोक्तेष्वतीतेषु...। साधुभ्यस्त्रैवर्णिकेभ्य एव प्रतिगृह्णीयान्न तु शूद्रादिभ्यः।... 16. अर्धं क्षेत्रफलं यो राज्ञे समर्पयति सोऽर्धिकः। अर्धसीरिण इति योगिस्मरणात् (Y. I, 66)।... दासो गृहदासः।... यश्च तवाहमित्यात्मानं निवेदयेत्।... LVIII, 3. मृतस्य पित्रादेः पुत्रादिर्यच्छुक्लेन धनेनौर्ध्वदेहिकं पारलौकिकं पिण्डोदकदानादि करोति तेनास्य देवत्वं संपादयति ॥ 9. पितृपितामहादिक्रमेण यद्दायरूपणश्चा प्राप्तं यच्च प्रीत्या मित्रादिभ्यो लब्धम्...

उत्कोचशुल्कसंप्राप्तमविक्रेयस्य विक्रयैः ।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥ १० ॥
पार्श्विकद्यूतचौर्यार्त्तप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥ ११ ॥
यथाविधेन द्रव्येण यत्किंचित्कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥ १२ ॥ ५८ ॥

---

गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान्कुर्यात् । १ । सायं प्रातश्चाग्निहोत्रम् । २ । देवताभ्यो जुहुयात् । ३ । चन्द्रार्कसंनिकर्षविप्रकर्षयोर्दर्शपूर्णमासाभ्यां यजेत । ४ । प्रत्ययनं पशुना । ५ । शरद्ग्रीष्मयोश्चाग्रयणेन । ६ ।

---

11. चौर्यार्त्तं प्रतिरूपकसाहसौ C[1,2]; चौर्यार्तिप्रतिरूपकसाहसैः Nârada 3, 49.

---

10...शुल्कं घट्टादिदेयम् । कन्यादिमूल्यं च । अविक्रेयं लाक्षालवणादि । तद्विक्रयेण यल्लब्धम् । यच्च पूर्वोपकृताल्लब्धम् । तत्सर्वेषां शबलमुच्यते ॥ 11. पार्श्वे स्थित्वा चामरचालना पार्श्विकम् ।... चौर्यं प्रसिद्धम् । आर्त्तं भैक्षकर्म । प्रतिरूपकमन्यप्रदर्शनेन स्वयं दानादिग्रहणम् । कृत्रिमसुवर्णादिकरणं वा ।... व्याजमन्यद्रव्यप्रदर्शनेनान्यद्रव्य[ार्पण]म् ।... 12... यादृशेन शुक्लादिना द्रव्येण यदैहिकामुष्मिकफलसाधनं कर्म करोति... तादृशमेव... फलं प्राप्नोति ॥ LIX, 2... श्रौतस्मार्तकर्मणोः 'श्रौतस्मार्ताग्निनियमेन स्मार्तेषु गृह्याग्निविधानाच्छ्रौतेषु त्रेताग्निसिद्धिरर्थसिद्धैवेति न पृथग्वचनम् ।... 3. अग्निहोत्रासंभवे ऽग्निहोत्रदेवताभ्यो... गृह्याग्नौ जुहुयात् ...

व्रीहियवयोर्वा पाके । ७ । त्रैवार्षिकाभ्यधिकान्नः । ८ । प्रत्यब्दं सोमेन । ९ । वित्ताभावे इष्ट्या वैश्वानर्या । १० । शूद्रान्नं यागे परिहरेत् । ११ । यज्ञार्थं भिक्षितमवाप्तमर्थं सकलमेव वितरेत् । १२ । सायं प्रातर्वैश्वदेवं जुहुयात् । १३ । भिक्षां च भिक्षवे दद्यात् । १४ । अर्चितभिक्षादानेन गोदानफलमाप्नोति । १५ । भिक्ष्वभावे ग्रासमात्रं गवां दद्यात् । १६ । वह्नौ वा प्रक्षिपेत् । १७ । भुक्तेऽप्यन्ने विद्यमाने न भिक्षुकं प्रत्याचक्षीत । १८ । कण्डनी पेषणी चुल्ली कुम्भ उपस्कर इति पञ्च सूना गृहस्थस्य । १९ । तन्निष्कृत्यर्थं च ब्रह्मदेवभूतपितृनरयज्ञान्कुर्यात् । २० । स्वाध्यायो ब्रह्मयज्ञः । २१ । होमो

---

LIX, 8, 9. are connected in $C^{1,2}$. 11 T. and C. om. $V^4$; but 13 is marked १२; $V^{1-3}$ omit 11 T. See M. XI,

---

7. हेमन्ते व्रीहिपाको वसन्ते यवपाकः ।... 8... तथाविधः सोमेन यजेत । त्रैवर्षिका० इति योगिस्मरणात् ( Y. I, 124 )... 9. अब्दसामान्यश्रवणेऽपि वसन्ते ।... 10. पशुसोमचातुर्मास्यादिपर्याप्तवित्ताभावे... 12...न किंचिदपि तस्मात्स्वयमुपयुञ्जीत ।... 14. सायंप्रातर्भिक्षवे संन्यासिने भिक्षां...दद्यात् ।... 15. आद्यन्तयोर्भिक्षादानस्य जलदानमर्चनम् ।... 16. संन्यासिब्रह्मचार्याद्यभावे... 18. गृहपतिभोजनानन्तरमपि पूर्वशिष्टेनान्नेन भिक्षवे न भिक्षादेयैव ।... 19... पञ्च सूनाः प्राणिहिंसास्थानानि ।... 20. तासां प्राणिहिंसानां निष्कृतिर्दुरितोपशमस्तदर्थम्... 21... क्रियाविशेषानुपादानादध्ययनमध्यापनं वा ब्रह्मयज्ञः ।...

दैवः । २२ । पितृतर्पणं पित्र्यः । २३ । बलिर्भौतः । २४ ।
नृयज्ञश्चातिथिपूजनम् । २५ ।

देवतातिथिभृत्यानां पितॄणामात्मनस्तथा ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ २६ ॥
ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात् ।
तस्मादभ्यागतानेतान्गृहस्थो नावमानयेत् ॥ २७ ॥
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
ददाति च गृहस्थस्तु तस्माज्ज्येष्ठो गृहाश्रमी ॥ २८ ॥
ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तस्माच्छ्रेष्ठो गृहाश्रमी ॥ २९ ॥

त्रिवर्गसेवां सततान्नदानं
सुरार्चनं ब्राह्मणपूजनं च ।
स्वाध्यायसेवां पितृतर्पणं च
कृत्वा गृही शक्रपदं प्रयाति ॥ ३० ॥ ५९ ॥

---

24; Y. I, 127. C[1,2] place 24 before 23 but the reading of V[1–4] N. seems the *lectio doctior*.

---

26. भृत्यानां पुत्रकलत्रादीनाम् ।... 27... अभ्यागतान्भिक्षाकाले प्राप्तान्... 29... भूतानि श्वादीनि ।... 30...स्वाध्यायस्य वेदस्य सेवाध्ययनाध्यापनार्थजिज्ञासा ।...

ब्राह्मे मुहूर्त उत्थाय मूत्रपुरीषोत्सर्गं कुर्यात् । १ । दक्षिणाभिमुखो रात्रौ दिवा चोदङ्मुखः संध्ययोश्च । २ । नाप्रच्छादितायां भूमौ । ३ । न फालकृष्टायाम् । ४ । न च्छायायाम् । ५ । न चोषरे । ६ । न शाद्वले । ७ । न ससत्त्वे । ८ । न गर्ते । ९ । न वल्मीके । १० । न पथि । ११ । न रथ्यायाम् । १२ । न पराशुचौ । १३ । नोद्याने । १४ । नोद्यानोदकसमीपयोः । १५ । न भस्मनि । १६ । नाङ्गारे । १७ । न गोमये । १८ । न गोव्रजे । १९ । नाकाशे । २० । नोदके । २१ । न प्रत्यनिलानलेन्द्वर्कस्त्रीगुरुब्राह्मणानां च । २२ । नैवानवगुण्ठितशिराः । २३ । लोष्टेष्टकापरिमृष्टगुदो गृहीतशिश्नश्चोत्थायाद्भिर्मृद्भिश्चोद्धृताभिर्गन्धलेपक्षयकरं शौचं कुर्यात् । २४ ।

---

LX, 17 om. v; $C^{1,2}$ place it before 16. 23. नैवाव॰ $C^2$. 24. लोष्टेष्टकाभिः परिमृज्य गुदं $C^{1,2}$v.

---

LX, 1. रात्रेः पश्चिमो यामो ब्राह्ममुहूर्तः ।... 3. तृणादिभिरनाच्छादितायां भूमौ... 5. छाया यज्ञियवृक्षाणाम्... 8. सत्त्वानि कृमयस्तद्युक्ते देशे ॥ 9. श्वभ्रं तद्बिलस्याप्युपलक्षणम् । वर्जयेद्वृक्षमूलानि चैत्यश्वभ्रबिलानि चेति याम्यात् ॥ 13. परकीयमूत्रपुरीषादौ ॥ 15... उदकं जलाशयः ।... 22. वाय्वग्निचन्द्रसूर्यस्त्रीपित्रादिब्राह्मणानां प्रत्याभिमुख्येन ।... 24... इदं च काष्ठतृणयोरप्युपलक्षणम् ।... वामकरेण धृतमेहनश्चकारादुत्क्षिप्तवासाः ।... उद्धृताभिः... तेन जलान्तःशौचनिषेधः ।...

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥ २५ ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं च वनस्थानां यतीनां तु चतुर्गुणम् ॥ २६ ॥ ६० ॥

---

अथ पालाशं दन्तधावनं नाद्यात् । १ । नैव श्लेष्मान्तकारिष्टविभीतकधवधन्वनजम् । २ । न च बन्धूकनिर्गुण्डीशिग्रुतिल्वतिन्दुकजम् । ३ । न च कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलजम् । ४ । न पारिभद्रकाम्लिकामोचकशाल्मलीशाणजम् । ५ । न मधुरम् । ६ । नाम्लम् । ७ । नोर्ध्वशुष्कम् । ८ । न सुषिरम् । ९ । न पूतिगन्धि । १० । न पिच्छिलम् । ११ । न दक्षिणापराभिमुखः । १२ । अथाचोदङ्मुखः प्राङ्मुखो वा । १३ । वटासनार्कखदिरकरञ्जबदरसर्जनिम्बारिमेदापामार्गमालतीककुभबिल्वानामन्यतमम् । १४ । काषायं तिक्तं कटुकं च । १५ ।

---

LXI, 9. शुषिरम् C[1,2].

---

25... एकत्र वामकरे... LXI, 2. श्लेष्मान्तकः शेलुः ।... विभीतकः कलिद्रुमः ।... 4. कोविदारो युगपत्रकः ।... पीलुर्गुडफलः ।... 5. पारिभद्रकः शक्रपादपः ।... 6. मधुरं मधुरसं मधुयष्टिकादि ॥ 7. आम्लरसमामलक्यादि ॥ 8. ऊर्ध्वं वृक्षशाखायामेव शुष्कम् ॥ 9. सुषिरं सच्छिद्रम् ॥ 11. श्लक्ष्णम् ॥

कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥ १६ ॥
प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।
अमावास्यां न चाश्नीयाद्दन्तकाष्ठं कदा च न ॥१७॥६१॥

---

अथ द्विजातीनां कनीनिकामूले प्राजापत्यं नाम तीर्थम् । १ । अङ्गुष्ठमूले ब्राह्मम् । २ । अङ्गुल्यग्रे दैवम् । ३ । तर्जनीमूले पित्र्यम् । ४ । अनग्न्युष्णाभिरफेनिलाभिर्न शूद्रैककरावर्जिताभिरक्षाराभिरद्भिः शुचौ देशे स्वासीनोऽन्तर्जानुः प्राङ्मुखश्चोदङ्मुखो वा तन्मनाः सुमनाश्चाचामेत् । ५ । ब्राह्मेण तीर्थेन त्रिराचामेत् । ६ । द्विः प्रमृज्यात् । ७ । खान्यद्भिर्मूर्धानं हृदयं स्पृशेत् । ८ ।

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ ९ ॥ ६२ ॥

---

17...अमावास्या पूर्णमास्युपलक्षणम् ।... LXII, 5... अफेनिलाः फेनरहिताः । फेनो बुद्बुदग्रहणाय ।... शूद्रो ऽनुपनीतोपलक्षणम् । शूद्रश्चैककरश्च ताभ्यामावर्जिता या न भवन्त्यापस्ता एक एव करो यस्यासावेककरः...। अक्षाराः क्षाररसरहिताः ।... दक्षिणं बाहुं जान्वन्तराकृत्वेति गौतमीयाद्वामस्यानियमः । ( Gaut. I, 36 )...चकारादैशान्याभिमुखः ।... 6. ब्राह्मदैवप्राजापत्यानामन्यतमेन तीर्थेन पुण्यभागेन... आचामेत् ।... 7. अङ्गुष्ठमूलेन मुखमिति शेषः ।... 8. खानि नाभेरूर्ध्ववर्तीनि ।...

अथ योगक्षेमार्थमीश्वरमधिगच्छेत् । १ । नैकोऽध्वानं प्रपद्येत । २ । नाधार्मिकैः सार्धम् । ३ । न वृषलैः । ४ । न द्विषद्भिः । ५ । नातिप्रत्यूषसि । ६ । नातिसायम् । ७ । न संध्ययोः । ८ । [ न मध्याह्ने । ९ । न संनिहितपानीयम् । १० । ] नातितूर्णम् । ११ । न रात्रौ । १२ । न संततं बालव्याधितार्तैर्वाहनैः । १३ । न हीनाङ्गैः । १४ । न दीनैः । १५ । न गोभिः । १६ । नादान्तैः । १७ । यवसोदके वाहनानामदत्त्वात्मनः क्षुत्तृष्णापनोदने न कुर्यात् । १८ । न चतुष्पथमधितिष्ठेत् । १९ । न रात्रौ वृक्षमूलम् । २० । न शून्यालयं । २१ । न तृणम् । २२ । न पशूनां बन्धनागारम् । २३ । न केशतुषकपालास्थिभस्माङ्गारान् । २४ । न कार्पासास्थि । २५ । चतुष्पथं प्रदक्षिणीकुर्यात् । २६ । देवतार्चां च । २७ । प्रज्ञातांश्च वनस्पतीन् । २८ । अग्निब्राह्मणगणिकापूर्ण-

---

LXIII, 1. अधिगच्छेत् । V[4] ( and Gautama IX, 63 ); उपगच्छेत् । V[1-3] C[1,2]v; अभिगच्छेत् । N. 9, 10 om. V[4]. 9 om. Ap. C[1,2]v. 13. व्याल० C[1,2]v; C[1,2]v after 14. add न रोगिभिः । 18. यवसोदकैर्वा० all. 25—29 om. v. 27. देवतां च । C[1,2].

---

LXIII, 4. वृषलाः शूद्राः ।... 13... वाहनैरश्वादिभिः ॥ 15. दीनैर्दुर्बलैः ॥ 16. गोभिर्बलीवर्दैः ॥ 22. सतृणप्रदेशम् ॥

कुम्भादर्शच्छत्रध्वजपताकाश्रीवृक्षवर्धमाननन्द्यावर्तांश्च । २९ । तालवृन्तचामराश्वगजाजगोदधिक्षीरमधुसिद्धार्थकांश्च । ३० । वीणाचन्दनायुधार्द्रगोमयफलपुष्पार्द्रशाकगोरोचनादूर्वाप्ररोहांश्च । ३१ । उष्णीषालंकारमणिकनकरजतवस्त्रासनयानामिषांश्च । ३२ । भृङ्गारोद्धृतोर्वराबद्धैकपशुकुमारीमीनांश्च दृष्ट्वा प्रयादिति । ३३ । अथ मत्तोन्मत्तव्यङ्गान्दृष्ट्वा निवर्तेत । ३४ । वान्तविरिक्तमुण्डितजटिलवामनांश्च । ३५ । काषायिप्रव्रजितमलिनांश्च । ३६ । तैलगुडशुष्कगोमयेन्धनतृणपलाशभस्माङ्गारांश्च । ३७ । लवणक्लीबासवनपुंसककार्पासरज्जुनिगडमुक्तकेशांश्च । ३८ । वीणाचन्दनार्द्रशाकोष्णी-

31. ॰गोमयपुष्पशाक॰ C[1,2]. 33. ॰रज्जुबद्धपशु॰ C[1,2]; ॰रज्जु॰ from the C. 35. ॰मुण्डमलिनवसनजटिल॰ C[1,2]. 36. कषायि॰ C[1,2]v. 37. ॰तृणकुशपलाश॰ C[1,2].



29. प्रयाणे शकुनान्याह ।... ब्राह्मणं सोष्णीषम् ।...पूर्णकुम्भं जलेन ।... वर्धमानः शरावकः । नन्द्यावर्तो राजगृहविशेषः ।... 30... गौः सवत्सा ।... 32...आमिषं सरुधिरं मांसम् ।... 33... उद्धृता उह्यमाना उर्वरा सर्वसस्याढ्या मृत्तिका ।... रज्जुबद्ध एकाकी पशुर्बलीवर्दादिः ।... कुमार्यनूढा कन्या । सा च श्वेताम्बरा ।... मीनो पक्वो मत्स्यः ।... एतान्प्रदक्षिणीकृत्य प्रयायात् ।... 36. काषायिणो वृथालिङ्गधारिणः । प्रव्रजितः संन्यासी । मलिनो मलाक्रान्तदेहः कापालिकादिः ।... 37... तृणं कुशदूर्वाव्यतिरिक्तम् । पलाशं पलाशादिपर्णं न ताम्बूलपर्णानि ।... 38. निगडः पादश्रृङ्खला । मुक्ताः प्रकीर्णाः केशा यस्य सः ।...

षालंकरणकुमारीस्तु प्रस्थानकालेऽभिनन्दयेदिति । ३९ । देवब्राह्मणगुरुबभ्रुदीक्षितानां छायां नाक्रामेत् । ४० । निष्ठ्यूतवान्तरुधिरविण्मूत्रस्नानोदकानि च । ४१ । न वत्सतन्त्रीं लङ्घयेत् । ४२ । प्रवर्षति न धावेत् । ४३ । न वृथा नदीं तरेत् । ४४ । न देवताभ्यः पितृभ्यश्चोदकमप्रदाय । ४५ । न बाहुभ्याम् । ४६ । न भिन्नया नावा । ४७ । न कूलमधितिष्ठेत् । ४८ । न कूपमवलोकयेत् । ४९ । न लङ्घयेत् । ५० ।

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्त्वेषां मान्यः स्नातश्च भूपतेः ॥५१॥६३॥

---

परनिपानेषु न स्नानमाचरेत् । १ । आचरेत्पञ्च पिण्डानुद्धृत्यापस्तथापदि । २ । नाजीर्णे । ३ । न चातुरः । ४ । न नग्नः । ५ । न रात्रौ । ६ । राहुदर्शनवर्जम् । ७ ।

---

42—47 om. v. 43. पितृभ्यश्चोदकामं प्रदाय । C[1,2]. 48. कूपम् V[4]. 51. तेषां V[1–4]. LXIV, 2. उद्धृत्यापदि । C[1,2]v.

---

40. देवो देवप्रतिमा । ब्राह्मणो बहुश्रुतः । न । जातिमात्रम् ।... गुरुरध्यापकः । मन्त्रोपदेष्टा च । बभ्रुः कपिलवर्णो गौरन्यो वा ।... एषां छायां कामतो नाक्रामेन्नोल्लङ्घयेदधितिष्ठेत वा ॥ 42... वत्सग्रहणं गोमात्रोपलक्षणम् ।... 51. स्नातो विद्याव्रतोभयस्नातः ।... LXIV, 2. जलान्तराभावे सप्त पञ्च चतुरस्त्रीन्वा मृत्पिण्डान्कूपाद्धटत्रयं जलं चोद्धृत्य परकीयेष्वपि स्नायात् ।... 4. आतुरो ज्वराद्यभिभूतः ॥

न संध्ययोः । ८ । प्रातःस्नानशीलोऽरुणताम्रां प्राचीमालोक्य स्नायात् । ९ । स्नातः शिरो नावधुनेत् । १० । नाङ्गेभ्यस्तोयमुद्धरेत् । ११ । न तैलवत्संस्पृशेत् । १२ । नाप्रक्षालितं पूर्वधृतं वसनं बिभृयात् । १३ । स्नातः सोष्णीषो धौतवाससी बिभृयात् । १४ । न म्लेच्छान्त्यजपतितैः सह संभाषणं कुर्यात् । १५ । स्नायात्प्रस्रवणदेवखातसरोवरेषु । १६ । उद्धृताद्भूमिष्ठमुदकं पुण्यं स्थावरात्प्रस्रवत्तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्वत एव गाङ्गम् । १७ । मृत्तोयैः कृतमलापकर्षोऽप्सु निमज्योपविश्यापो हि ष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिरिदमापः प्रवहतेति च तीर्थमभिमन्त्रयेत् । १८ । ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत् । १९ । तद्विष्णोः

9. T. om. V[1-3]. ०स्नानशीलो ऽरुण० V[4]; स्नानशीलो from the C. ०स्नाय्यरुणविकिरणग्रस्तां प्राचीमवलोक्य C[1,2]. 17. प्रस्रवणं C[1,2]. 18. निमज्यापो C[1,2]; निमस्पृश्यापो v. प्रवहत इति चतुर्थम् V[1-3] C[1,2].

9. प्रातः स्नानशीलः स्नायात् । अनेनारुणोदयात्प्राक्स्नानं निषिद्धम् ।... 10. स्नानानन्तरं शिरःस्थितान्केशान् ... न कम्पयेत् ।... 11. हस्तेन वस्त्रेण वाङ्गशोधनं न कुर्यात् ।... 14... उष्णीषं जलापसारणाय शिरोवेष्टनं तेन सहितः । तच्चागाढबन्धनं शिरसि वेष्टयेत् ।... धौते स्वयमेव... 15. स्नानोत्तरं निषेधमाह ।... 17... साधुभिर्वसिष्ठादिभिः परिगृहीतम् । नदीसंबन्धि । यथा वशिष्ठप्राची विश्वामित्रप्राचीत्यादि ।... 18... निमज्य तीर उपविश्य आपो हि ष्ठेत्याद्यष्टभिर्मन्त्रैस्तीर्थमभिमन्त्रयेत् । निमज्योपस्पृशेदिति पाठे निमज्जनानन्तरमाचम्य तीर्थमभिमन्त्रयेत् ॥

परमं पदमिति वा । २० । द्रुपदां सावित्रीं वा । २१। युञ्जते मन इत्यनुवाकं वा । २२ । पुरुषसूक्तं वा । २३ । स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात् ।२४। परिवर्तितवासाश्चेत्तीर्थमुत्तीर्य । २५ । अकृत्वा देवपितृतर्पणं स्नानशाटीं न पीडयेत् । २६ । स्नात्वाचम्य विधिवदुपस्पृशेत् । २७ । पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाणि दद्यात् । २८ । उदकाञ्जलिं पश्चात् । २९ । आदावेव दिव्येन तीर्थेन देवतानां कुर्यात् । ३० । तदनन्तरं पित्र्येण पितॄणाम् । ३१ । तत्रादौ स्ववंश्यानां तर्पणं कुर्यात् । ३२ । ततः संबन्धिबान्धवानाम् । ३३ । ततः सुहृदाम् । ३४ । एवं नित्यस्नायी स्यात् । ३५ । स्नातश्च पवित्राणि यथाशक्ति जपेत् । ३६ । विशेषतः

---

26. स्नानवस्त्रादि $C^{1,2}$v. 29, 30. T. om. $V^{1-4}$. 33. संबन्धिनां बान्धवानाम् $V^4$.

---

20... त्रिरित्यनुवर्तते ॥ 21. द्रुपदादिवेन्मुमुचान इति यजुर्वेदप्रसिद्धा । तां वा त्रिर्जपेत् ।... 25. यस्तु स्नात्वा जले स्थातुमशक्तः शुष्कं वासः परिधत्ते स तीर्थाद्बहिरागत्य स्थल एव स्नानाङ्गं तर्पणं कुर्यात् ।... 26. परिवर्तितवासा अपि देवपितृतर्पणात्प्राक् स्नानवस्त्रं न निष्पीडयेत् ।... 27. वस्त्रनिष्पीडनान्तस्नानविध्यानन्तर्यं द्विराचमनस्य गमयितुम्... 28... षोडश पुष्पाणि ।... 32... पितृमातृमातामहांस्तदनन्तरं... पितृव्यभ्रातृमातुलादीन्तर्पयेत् ।... 33. संबन्धिनो भागिनेयश्वशुरश्यालादयः । बान्धवाः पैतृष्वस्रेयमातृष्वस्रेयमातुलादयः ।... 35. उक्तेन विधिना प्रत्यहं स्नायात् ।... 36... पवित्राणि... अनियतसंख्यानि जपेत् ॥

सावित्रीम् । ३७ । पुरुषसूक्तं च । ३८ । नैताभ्यामधिकमस्ति । ३९ ।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिबोधिते ॥ ४० ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अम्मात्रेणाभिषिक्तस्य नश्यंत इति धारणा ॥ ४१ ॥
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः ॥४२॥ ६४ ॥

अथातः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तो देवतार्चायां स्थले वा भगवन्तमनादिनिधनं वासुदेवमभ्यर्चयेत् । १ । अश्विनोः प्राणस्तौत इति जीवादानं दत्त्वा युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात् । २ । आपो हिष्ठेति

37. सावित्रीं त्ववश्यं जपेत् । $V^{1-3}$ $C^{1,2}$; see the C. 40. ०बोधिते ॥ $V^4$ N; ०नोचिते $V^{1-3}$; ०नोदिते $C^{1,2}$v; चोदिते Ap. 41. स्नातस्य जलमात्रेण नश्यते $C^{1,2}$. LXV, 2. अश्विनोः प्राणैस्त्वोत $V^4$; अश्विनौ प्राणिस्त्वौत $V^{1-3}$; अश्विनैः प्राणैस्त्वेते $C^{1,2}$; अश्विनोः प्राणैः सौत v; see Kâṭhaka XI, 7. My reading is conjectural. After इति $V^{1-3}$ $C^{1,2}$ insert, काचकीय (कीचकीय)-मन्त्रेणाष्टव्यजीवस्य भगवतो ; see the C. जीवोविनिवीवादानं $V^{1-3}$.

37. पूर्वोक्तसंख्यापेक्षयाधिकसंख्यया गायत्रीं जपेत् ।... 14... उद्धृतेनानुद्धृतेन वा तीर्थातीर्थसाधारणेन ।... LXV, 2... इति काचकीयमन्त्रेण चेष्टव्यजीवस्य भगवतो जीवो विनयिता साक्षीति स्मरणात् ।

तिसृभिरर्घ्यं निवेदयेत् । ३ । हिरण्यवर्णा इति चतसृभिः पाद्यम् । ४ । शं न आपो धन्वन्या इत्याचमनीयम् । ५ । इदमापः प्रवहतेति स्नानीयम् । ६ । रथेष्वक्षेषु वृषभराजा इत्यनुलेपनालंकारौ । ७ । युवा सुवासा इति वासः । ८ । पुष्पावतीरिति पुष्पम् । ९ । धूरसि धूर्वेति धूपम् । १० । तेजोऽसि शुक्रमिति दीपम् । ११ । दधिक्राव्ण इति मधुपर्कम् । १२ । हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम् । १३ ।

चामरं व्यजनं मात्रां छत्रं यानासने तथा ।
सावित्रेणैव तत्सर्वं देवाय विनिवेदयेत् ॥ १४ ॥
एवमभ्यर्च्य च जपेत्सूक्तं वै पौरुषं ततः ।
तेनैव जुहुयादाज्यं य इच्छेच्छाश्वतं पदम् ॥१५॥ ६५ ॥

---

5. शन्न $C^{1,2}$v. धनुन्या $V^{1-4}$ N. See Ath. V. I. 6, 4. 7. रथेस्ववेषु $V^{1-4}$ $C^{1,2}$ N.; ०स्ववत्तेषु v. See Taitt. Brâhm. II, 7 7, 2. 10. धूर्वं इति $V^{1-4}$v; धूपमिति $C^{1,2}$ See the C. and Vâjas. *Samh*, I, 8.

---

5. शन्न आपो धनुन्या इति कठशाखीययैकर्चा... 6. इदमापः प्रवहतेत्येकयर्चा... 7. रथेस्ववर्त्तेष्विति कठशाखीयैश्चतुर्भिस्तु... 8. युवा सुवासा इत्येकयर्चा... 9. पुष्पावतीः प्रसूवतीरिति तैत्तिरीयर्चा पुष्पम् । 10 धूरसि धूर्वं धूर्वन्तमिति तैत्तिरीययजुषा धूपम् ॥ 11. तेजोऽसि शुक्रमिति कठशाखीययैकर्चा दीपम् ॥ 12. दधिक्राव्ण अकारिषमित्येकयर्चा... 13. हिरण्यगर्भः समवर्ततेत्यारभ्य यश्चिदापो महिनेत्यन्ताभिरष्टाभिर्ऋग्भिर्नैवेद्यम्... 14... मात्रा आदर्शः ।... यानं शिविकादि । आसनं सिंहासनादि ।... एतानि सावित्रेण गायत्र्या देवाय भगवते विनिवेदयेत् ।

न नक्तं गृहीतेनोदकेन देवपितृकर्म कुर्यात् । १ । चन्दनमृगमददारुकर्पूरकुङ्कुमजातीफलवर्जमनुलेपनं न दद्यात् । २ । न वासो नीलीरक्तम् । ३ । न मणिसुवर्णयोः प्रतिरूपमलंकरणम् । ४ । नोग्रगन्धि । ५ । नागन्धि । ६ । न कण्टकिजम् । ७ । कण्टकिजमपि शुक्लं सुगन्धिकं तु दद्यात् । ८ । रक्तमपि कुङ्कुमं जलजं च दद्यात् । ९ । न धूपार्थे जीवजातम् । १० । न घृततैलं विना किं च न दीपार्थे । ११ । नाभक्ष्यं नैवेद्यार्थे । १२ । न भक्ष्ये अप्यजामहिषीक्षीरे । १३ । पञ्चनखमत्स्यवराहमांसानि च । १४ ।

प्रयतश्च शुचिर्भूत्वा सर्वमेव निवेदयेत् ।
तन्मनाः सुमना भूत्वा त्वराक्रोधविवर्जितः ॥ १५ ॥६६॥

---

अथाग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य परिषिच्य सर्वतः पाकादग्रमुद्धृत्य जुहुयात् । १ । वासुदेवाय संक-

---

LXVI, 1. गृहीतोदकेन V[4]. See LXXIX, 1. 6 om. v; C[1,2] place it before 5. See LXXXI, 5. 8. तु om. C[1,2].

---

LXVI, 1. उक्तोपचारद्रव्यविवेचनं षट्षष्टितमेन कर्तुम्... 2. दारु सुगन्धिर्देवदारुः ।... 4. कृत्रिममणिसुवर्णादिनिर्मितमलंकारं न दद्यात् ।... 5. उग्रो घ्राणग्लानिकरो गन्धो यस्येति तत् । धत्तूरादि ॥ 7. कण्टकिवृक्षोद्भवं कण्टकारिकादि ।... 9... रक्तोत्पलम्... 10. प्राण्यङ्गं नखश्रृङ्गादि धूपत्वे न देयम् ।... LXVII, 1... परिषिच्य परितो दर्भानभितोऽभिषिच्य ।... अग्रमष्टाचत्वारिंशद्ग्रासपरिमितम्...

र्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवाय । २ । अथाग्नये[1] सोमाय[2] मित्राय[3] वरुणाय[4] इन्द्राय[5] इन्द्राग्निभ्याम्[6] विश्वेभ्यो देवेभ्यः[7] प्रजापतये[8] अनुमत्यै[9] धन्वन्तरये[10] वास्तोष्पतये[11] अग्नये स्विष्टकृते च[12] । ३ । ततोऽन्नशेषेण बलिमुपहरेत् । ४ । तक्षोपतक्षाभ्याम् । ५ । अभितः पूर्वेणाग्निम् । ६ । अम्बा नामासीति[1] दुला नामासीति[2] नितत्नी नामासीति[3] चुपुणीका नामासीति[4] सर्वासाम् । ७ । नन्दिनि[1] सुभगे[2] सुमङ्गलि[3] भद्रंकरीति[4] स्रक्तिष्वभिप्रदक्षिणम् ।८। स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्च । ९ ।

---

LVII, 3. $C^{1,2}$v omit the figures in 3, 7, 8, 14. 5. भक्षोपभक्षयाभ्याम् । $V^{1-4}$; भक्ष्योपभक्षयाभ्याम् । $C^{1,2}$; भक्षमोदनादिः । उपभक्ष्यं शाकादिः । N.; तक्षोपतक्षाभ्याम् Kâṭh. Gṛihyas. 6. पूर्वेणाग्नेः । $C^{1,2}$. 7. अम्बा (अबा), खला, नितन्ती (नितन्त्री)' क्षिप्रणिका $V^{1-4}$ $C^{1,2}$; अधो, सुप्रतीका, अस्तत्पती v. See Kâṭh. Gṛihyas., and Kâṭhaka XL, 4; Taitt. Samh. IV, 4, 5, 1. 8. भद्रकालीति $V^{1-4}$ $C^{1,2}$. स्वस्थिष्व॰ $C^{1,2}$. 9. वनस्पतिभ्यः । $C^{1,2}$ ॰भ्य । v.

---

3. कठशाखानुसारेण वैश्वदेवमाह ।... अग्न्यादिभ्यो द्वादशाहुतीर्जुहुयात् ।... 6. उभयस्यां दिशि अभितः अग्नेः पूर्वं प्रदक्षिणं कृत्वा प्रथमं पूर्वोत्तरकोणे । ( Devapâla, Kâṭhakagṛihyabhâshya ). 7. अम्बा नामासीति सप्त । पूर्वेणाग्निमित्यनुषज्यते ( Kâṭh. Gṛihyas. and Dev. ). 8. अभिदक्षिणं प्रदक्षिणं यथा भवति पूर्वदक्षिणकोणादारभ्य । ( Dev. ) 9. ध्रुवा गृहाधारभूता स्थूणा सकर्णस्तम्भस्तस्यां श्रिय इति द्वाभ्याम् । हिरण्यकेशीति श्रीविशेषणम् ॥

धर्माधर्मयोर्द्वारे मृत्यवे च । १० । उदधाने वरुणाय । ११ । विष्णव इत्युलूखले । १२ । मरुद्भ्य इति दृषदि । १३ । उपरि शरणे वैश्रवणाय राज्ञे[1] भूतेभ्यश्च[2] । १४ । इन्द्रायेन्द्रपुरुषेभ्य इति पूर्वार्धे । १५ । यमाय यमपुरुषेभ्य इति दक्षिणार्धे । १६ । वरुणाय वरुणपुरुषेभ्य इति पश्चार्धे । १७ । सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे । १८ । ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये । १९ । ऊर्ध्वमाकाशाय । २० । दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले । २१ । नक्तंचरेभ्य इति नक्तम् । २२ । ततो दक्षिणाग्रेषु दर्भेषु पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै स्वनामगोत्राभ्यां च पिण्डनिर्वपणं कुर्यात् । २३ । पिण्डानां चानुलेपनपुष्पधूपनैवेद्यादि दद्यात् । २४ । उदककलशमुपनिधाय स्वस्त्ययनं वाचयेत् । २५ । श्वकाकश्वपचानां भुवि निर्वपेत् । २६ ।

---

11. उदपाने $C^{1,2}$v.

---

10. धर्मादिद्वाभ्यां गृहद्वारे । धर्माधर्मयोर्मिलितयोर्देवतात्वमग्नीषोमीयवत् ॥ 12. विष्णवे नम इति... ( Dev. ) 14. शरणं गृहं तदुपरि अट्टालिकायां वैश्रवणायेति द्वाभ्याम् । 15. शरणम् इत्यनुवर्तते ।... 22. रात्रौ वैश्वदेवे क्रियमाणे नक्तंचरेभ्य इत्येकम् । 23... चकाराद्वस्त्वादिरूपस्वधाकाराभ्यां च पिण्डदानं कार्यम्... । 35. स्वस्ति त्वं ब्रूहीति यं कंचिद्ब्राह्मणं वाचयेत् । तं ब्राह्मणाय दद्यादित्यर्थः ॥

भिक्षां च दद्यात् । २७ । अतिथिपूजने च परं फल-
मधितिष्ठेत् । २८ । सायमतिथिं प्राप्तं प्रयत्नेनार्चयेत्
। २९ । अनाशितमतिथिं गृहे न वासयेत् । ३० । यथा
वर्णानां ब्राह्मणः प्रभुर्यथा स्त्रीणां भर्ता तथा गृहस्थ-
स्यातिथिः । ३१ । तत्पूजायां स्वर्गमाप्नोति । ३२ ।

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
तस्मात्सुकृतमादाय दुष्कृतं तु प्रयच्छति ॥ ३३ ॥
एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ ३४ ॥
नैकग्रामीणमतिथिं विप्रं सांगतिकं तथा ।
उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥ ३५ ॥
यदि त्वतिथिधर्मेण क्षत्रियो गृहमागतः ।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥ ३६ ॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ३७ ॥

---

30—33 T. and C. om. V[4]; but 34 is numbered as such. 34. अनित्या हि स्थितिर्यं॰ C[1,2]. 36. पूजयेत् ॥ C[1,2]v.

---

27. भिक्षां ग्रासमात्राम् ।... 29. सायं वैश्वदेवान्ते ।... 35. एक-ग्रामे भवा एकग्रामीणस्तादृशं विप्रम् ।... पूर्वपरिचयो विद्यते येनासौ सांगतिकः । तं च ।... 37. भृत्यैः... सह भोजनीयौ न त्वतिथिधर्मे-णार्चनीयौ । अब्राह्मणस्यातिथित्वाभावात् ।...

इतरानपि सख्यादीन्संप्रीत्या गृहमागतान् ।
प्रकृतान्नं यथाशक्ति भोजयेत्सह भार्यया ॥ ३८ ॥
स्ववासिनीं कुमारीं च रोगिणीं गुर्विणीं तथा ।
अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ॥ ३९ ॥
अदत्त्वा यस्तु एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ ४० ॥
भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दंपती ॥ ४१ ॥
देवान्पितॄन्मनुष्यांश्च भृत्यान्गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥ ४२ ॥
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ ४३ ॥
स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
न चाप्नोति गृही लोकान्यथा त्वतिथिपूजनात् ॥ ४४ ॥

---

38. इतराण्यपि C[1,2]. 39. सुवासिनीं C[1,2]v. See the C. and M. III, 114. 40. Manu has तु य 41. भृत्येषु स्वेषु C[1,2].

---

38. इतरान्मूर्धावसिक्तादीन् । सखिसंबन्धिनश्च ।... 39. ऊढा पितृगृहस्था कन्या स्ववासिनी । सुवासिनीति पाठे... 41. विप्रा अतिथयश्चकारादतिथिवदागता अभ्यागताः क्षत्रियाश्च । स्वाः सखिसंबन्धिबान्धवाः । भृत्या भरणीया मातापित्रादयः ।... चकाराद्दासीदासाः ।... 42. गृह्या देवताः श्र्यादयः । चकाराच्छ्वकाकादयः ।...

सायंप्रातस्त्वतिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्त्या सत्कृत्य विधिपूर्वकम् ॥ ४५ ॥
प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम् ।
प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥ ४६ ॥ ६७ ॥

---

चन्द्रार्कोपरागे नाश्नीयात् । १ । स्नात्वा मुक्तयोरश्नीयात् । २ । अमुक्तयोरस्तंगतयोः स्नात्वा दृष्ट्वा चापरेऽह्नि । ३ । न गोब्राह्मणोपरागेऽश्नीयात् । ४ । न राज्ञो व्यसने । ५ । प्रवसिताग्निहोत्री यदाग्निहोत्रं कृतं मन्येत तदाश्नीयात् । ६ । यदा कृतं मन्येत वैश्वदेवमपि । ७ । पर्वणि च यदा कृतं मन्येत पर्व । ८ । नाश्नीयाच्चाजीर्णे । ९ । नार्धरात्रे । १० । न मध्याह्ने । ११ । न संध्ययोः । १२ । नार्द्रवासाः । १३ । नैकवासाः । १४ । न नग्नः । १५ । नोदके । १६ । नोत्कुटकः । १७ ।

---

LXVIII, 3. ०गतयोर्दृष्ट्वा स्नात्वा C[1,2]v. 5. राज्ञो V[4]. N. राजान्यसने V[1–3]; राजव्यसने C[1,2]v Ap. 8. पर्व om. V[4]. 16. न जलस्थः । C[1,2]. from the C. 17. नोत्कुटकः । C[1,2].

---

45... विधिपूर्वकं मधुपर्कविधिना ।... 46... पादयोः प्रक्षालनपूर्वकं घृतादिनाभ्यञ्जनम् । दीपो विवासोद्योताय ।...एषां प्रत्येकं दानेन... LXVIII, 3...अपरेऽह्नि... उदितौ दृष्ट्वा... अश्नीयात् ।... 4...तद्दिने नाश्नीयात् ।... 9. अजीर्णे धूमोद्गारे ।... 15. नग्नो दशविधः प्रागुक्तः ॥ 16. जलस्थो नौकास्थो वा... 17. उत्कुटक ऊर्ध्वजानुः ॥

न भिन्नासनगतः । १८ । न च शयनगतः । १९ । न भिन्नभाजने । २० । नोत्सङ्गे । २१ । न भुवि । २२ । न पाणौ । २३ । लवणं च यत्र दद्यात्तन्नाश्नीयात् । २४ । न बालकान्निर्भर्त्सयेत् । २५ । नैको मृष्टम् । २६ । नोद्धृतस्नेहम् । २७ । न दिवा धानाः । २८ । न रात्रौ तिलसंबन्धम् । २९ । न दधिसक्तून् । ३० । न कोविदारवटपिप्पलशाणशाकम् । ३१ । नादत्त्वा । ३२ । नाहुत्वा । ३३ । नानार्द्रपादः । ३४ । नानार्द्रकरमुखश्च । ३५ । नोच्छिष्टश्च घृतमादद्यात् । ३६ । न चन्द्रार्कतारका निरीक्षेत । ३७ । न मूर्धानं स्पृशेत् । ३८ । न ब्रह्म कीर्तयेत् । ३९ । प्राङ्मुखोऽश्नीयात् । ४० । दक्षिणामुखो वा । ४१ । अभिपूज्यान्नम् । ४२ । सुमनाः स्रग्व्यनुलिप्तश्च । ४३ । न निःशेषकृत्स्यात् । ४४ । अन्यत्र दधिमधुसर्पिःपयःसक्तुपलमोदकेभ्यः । ४५ ।

---

26. मिष्टम् C[1,2]. 29. तिलसंयुक्तम् C[1,2] 34. नार्द्र॰ V[4]. 43. ॰लिप्तः । C[1,2].

---

23. पाणौ पाणितले ॥ 25. स्वपङ्क्तौ भुञ्जानान्बालकान् ... 29. तिलैः संबन्धो यस्य तद्रात्रौ ।... 30. रात्रौ... 32. यद्देवद्विजातिभ्यो न दद्यात्तन्न भक्षयेत् ।... 37. उच्छिष्टश्चन्द्रादीन्न पश्येत् ।... 38. उच्छिष्टो मस्तकं न स्पृशेत् ।... 39. उच्छिष्टो वेदं नोच्चारयेत् ।... 44. परिमिष्टमन्नं निःशेषं नाद्यात् ।... 45. सर्पिर्घृतम् ।...

नाश्नीयाद्भार्यया सार्धं नाकाशे न तथोत्थितः ।
बहूनां प्रेक्षमाणानां नैकस्मिन्बहवस्तथा ॥ ४६ ॥
शून्यालये वह्निगृहे देवागारे कथं च न ।
पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत् ॥ ४७ ॥
न तृतीयमथाश्नीयान्न चापथ्यं कथं च न ।
नातिप्रगे नातिसायं न सायं प्रातराशितः ॥ ४८ ॥
न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते ।
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ॥४९॥६८॥

---

नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात् । १ । न श्राद्धं भुक्त्वा । २ । न दत्त्वा । ३ । नोपनिमन्त्रितः श्राद्धे । ४ । न व्रती । ५ । न दीक्षितः ।६। न देवायतनश्मशा-

---

47. शून्यागारे C[1,2]v, LXIX, 2. स्नात्वा भुक्त्वा । v. 3. न श्राद्धं दत्त्वा C[1,2]; श्राद्धं from the C. 5. न स्नात्वा । न हुत्वा । न व्रती । नोपोष्य भुक्त्वा वा । C[1,2]. The last clause is from the C.

---

46... बहूनामिति बहुषु साभिलाषं प्रेक्षमाणेषु नाश्नीयात् । 47. शून्यं निर्जनं यदालयं गृहं तत्र । वह्नीनां गार्हपत्यादीनां गृहे शालायाम् ।... 48... कालद्वयातिरिक्ते तृतीये काले नाश्नीयात् ।... 49. यस्मिन्दृष्टे विचिकित्सा भवति तद्भावदुष्टम्...पीयूषादि... । तच्च जातिदुष्टादेरुपलक्षणम् ।... सप्तविधमभोज्यम् । भावेन चित्तवृत्त्या दूषिते म्लेच्छादिभाण्डसदृशे भाण्डे दुर्ब्राह्मणादिभोजनदुष्टे च ।... शयानो भूमावपि तिर्यग्भूतः शयनगतस्य प्रागेव निषेधात् ।... LXIX, 3. श्राद्धकरणानन्तरम् ॥ 5. व्रतं श्राद्धदिनपूर्वेद्युस्तनमेकादश्यादिकं च तद्वान् ।...

नशून्यालयेषु । ७ । न वृक्षमूलेषु । ८ । न दिवा । ९ । न संध्ययोः । १० । न मलिनाम् । ११ । न मलिनः । १२ । नाभ्यक्ताम् । १३ । नाभ्यक्तः । १४ । न रोगार्ताम् । १५ । न रोगार्तः । १६ ।

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम् ।
नोपेयाद्गुर्विणीं नारीं दीर्घमायुर्जिजीविषुः ॥१७ ॥ ६९ ॥

---

नार्द्रपादः सुप्यात् । १ । नोत्तरापरशिराः । २ । न नग्नः । ३ । नार्द्रवंशे । ४ । नाकाशे । ५ । न पालाशे शयने । ६ । न पञ्चदारुकृते । ७ । न गजभग्नकृते । ८ । न विद्युद्दग्धकृते ।९। न भिन्ने । १० । नाग्निप्लुष्टे । ११ । न घटासिक्तद्रुमजे । १२ । न श्मशानशून्यालयदेवता-

---

LXX, 1. स्वप्यात् । C1,2v Ap. 2. नोत्तरापरवाक्शिराः । C1,2. 4. नानुवंशम् । V1–4 Ap.; वंशो मेढी तद्दैर्घ्यमनु N.; नार्द्रवंशम् v. 6. पलाशशयने C1,2v. 11. ०प्लुष्टे C1,2; ०मुष्टे v.

---

8... बहुवचनाद्गुल्मलतादिग्रहणम् । 11. न मलिनाङ्गवस्त्राम् ।... रजस्वलोपलक्षणमिदम् ।... LXX, 2... प्राग्दक्षिणयोरभ्यनुज्ञानमनेन । प्राग्दक्षिणशिराः स्वप्यान्नोदक्प्रत्यक्शिराः क्वचिदिति स्मरणात् ।... 8. गजेन भग्नस्य तरोः काष्ठेन कृते ॥ 9. विद्युता दग्धस्य तरोः काष्ठेन कृते ॥ 10... न शीर्णखट्वायामिति पैठीनसीयात् ॥ 11. विद्युच्छिन्ने नाप्यग्निना दग्धे ॥ 12. घटैः आ सर्वदा सिक्तस्य तरोः काष्ठेन कृते ॥

यतनेषु । १३ । न चपलमध्ये । १४ । न नारीमध्ये । १५ । न धान्यगोगुरुहुताशनसुराणामुपरि । १६ ।
नोच्छिष्टो न दिवा सुप्यात्संध्ययोर्न च भस्मनि ।
देशे न चाशुचौ नार्द्रे न च पर्वतमस्तके ॥ १७ ॥ ७० ॥

---

अथ न कंच नावमन्येत । १ । न च हीनाधिकाङ्गान्मूर्खान्धनहीनानवहसेत् । २ । न हीनान्सेवेत । ३ । स्वाध्यायविरोधि कर्म नाचरेत् । ४ । वयोऽनुरूपं वेषं कुर्यात् । ५ । श्रुतस्याभिजनस्य धनस्य देशस्य च । ६ । नोद्धतः ।७। नित्यं शास्त्राद्यवेक्षी स्यात् ।८। सति विभवे न जीर्णमलवद्वासाः स्यात् । ९ । न नास्तीत्यभिभाषेत । १० । निर्गन्धोग्रगन्धि रक्तं च माल्यं बिभृयात् । ११ । बिभृयाज्जलजं रक्तमपि ।१२। यष्टिं च

---

17. स्वप्यात् $C^{1,2}$v. LXXI, 2. हीनाङ्गधिका॰ $C^{1,2}$v. 5. वेशं $V^{1-3}$ $C^{1,2}$v,

---

14. चपलो दुर्व्यसनी हस्तपादादिविचेष्टा ॥ 16... गवादिशब्देन तच्छाला उच्यन्ते । धान्यवत्साचात्तदुपरि शयनासंभवात् ।... 17. उच्छिष्ट-ऊर्ध्वाधरोच्छिष्टवान् ।... अशुचौ मूत्रविष्ठाद्युपहते देशे ।... LXXI, 1. कं च न सममुत्कृष्टमपकृष्टं वा... 4. स्वाध्यायो वेदाध्ययनाध्यापनक्रियाः 3. शास्यते धर्मो यैस्तानि स्मृतिमीमांसादीनि । आदिशब्दाद्धनबुद्ध्यारोग्यादिप्रतिपादकानि ।... 10. गृहेन्धनाद्यभावेऽपि नास्तिशब्दं नोच्चारयेत् । किंतु पूर्णमिति ब्रूयात् ॥

वैणवीम् । १३ । कमण्डलुं च सोदकम् । १४ । कार्पा-समुपवीतम् । १५ । रौक्मे च कुण्डले । १६ । नादित्य-मुद्यन्तमीक्षेत । १७ । नास्तं यान्तम् । १८ । न वाससा तिरोहितम् । १९ । न चादर्शजलमध्यगतम् । २० । न मध्याह्ने । २१ । न क्रुद्धस्य गुरोर्मुखम् । २२ । न तैलो-दकयोः स्वां छायाम् । २३ । न मलवत्यादर्शे । २४ । न पत्नीं भोजनसमये । २५ । न स्त्रियं नग्नाम् । २६ । न कं च न मेहमानम् । २७ । न चालानभ्रष्टकुञ्जरम् । २८ । न च विषमस्थो वृषादियुद्धम् । २९ । नोन्मत्तम् । ३० । न मत्तम् । ३१ । नामेध्यमग्नौ प्रक्षिपेत् । ३२ । नासृक् । ३३ । न विषम् । ३४ । अंभस्यपि । ३५ । नाग्निं लङ्घयेत् । ३६ । न पादौ प्रतापयेत् । ३७ । न कुशेषु परिमृज्यात् । ३८ । न कांस्यभाजने धावयेत् । ३९ । न पादं पादेन । ४० । न भुवमालिखेत् । ४१ ।

---

23. स्वच्छायाम् । $C^{1,2}$v. 30 om. $C^{1,2}$. 31 om. v. Ap. quotes both Sûtras. 38. कुशैस्तेषु वा $C^{1,2}$

---

19. वस्त्रान्तरितमपि ॥ 22... गुरुः श्रेयान् ॥ 25. स्वस्य पत्न्या वा भोजनकाले... 27. मूत्रपुरीषे कुर्वाणम्... 28. बन्धनच्युतं गजम् । चकाराद्व्याघ्रादींश्च ।... 29. विषमे जनसंमर्दादौ पलायनायोग्ये देशे स्थितो वृषगजमहिषादियुद्धम् ।... 32. अमेध्यं ष्ठीवनादि ।... 37. अग्नाविति शेषः ॥ 41. काष्ठादिभिः ॥

न लोष्टमर्दी स्यात् । ४२ । न तृणच्छेदी स्य
न दन्तैर्नखलोमानि छिन्द्यात् । ४४ । द्यूतं
। ४५ । बालातपसेवां च । ४६ । वस्त्रोपानहम
तान्यन्यधृतानि न धारयेत् । ४७ । न शूद्र
दद्यात् । ४८ । नोच्छिष्टहविषी । ४९ । न
। ५० । न चास्योपदिशेद्धर्मम् । ५१ । न व्रतम
संहताभ्यां पाणिभ्यां शिर उदरं च कण्डूयेत्
दधिसुमनसी प्रत्याचक्षीत । ५४ । नात्मनः
र्षेत् । ५५ । सुप्तं न प्रबोधयेत् । ५६ । न रक्तं
। ५७ । नोदक्यामभिभाषेत । ५८ । न म्लेच्छ
। ५९ । अग्निदेवब्राह्मणसंनिधौ दक्षिणं पा
। ६० । न परक्षेत्रे चरन्तीं गामाचक्षीत । ६१ ।

---

53. कण्डूयेत $V^{1-3}$ $C^{1,2}$ Ap. 55. अपकर्षयेत् । $V^{1-}$
om. $C^{1,2}$v. 60 . प्रदक्षिणं $C^{1,2}$.

---

42. करेण मृत्पिण्डमर्दनशीलो न स्यात् ।... 44.
श्मश्र्वादीनि ।... 46. बालातपः प्रातरातपः । संगवातप इत्य
तप इत्यपरे ।... 49... शूद्रोऽत्र दासव्यतिरिक्तः ।... 52
श्चित्तम् ।... 56. स्वापेक्षया विद्यादिभिरधिकं शयानं न प्र
57. आत्मन्यनुरक्तं रूक्षभाषणादिभिर्न विरक्तं कुर्यात् ।...
श्रौतः स्मार्तश्च । देवो विष्ण्वादिप्रतिमा ।... कण्ठप्रावृत
कुर्यात् ।... 61. परकीये यवादिक्षेत्रे निरूढं धान्यं भक्षयन्त
नाचक्षीत ।... 62. परशब्दोऽनुषज्यते । गोस्तन्ये पिबन्तं वत्सम्

वत्सकम् । ६२ । नोद्धतान्प्रहर्षयेत् । ६३ । न शूद्रराज्ये निवसेत् । ६४ । नाधार्मिकजनाकीर्णे । ६५ । न संवसेद्वैद्यहीने । ६६ । नोपसृष्टे । ६७ । न चिरं पर्वते । ६८ । न वृथाचेष्टां कुर्यात् । ६९ । न नृत्यगीते । ७० । नास्फोटनम् । ७१ । नाश्लीलं कीर्तयेत् । ७२ । नानृतम् । ७३ । नाप्रियम् । ७४ । न कं चिन्मर्मणि स्पृशेत् । ७५ । नात्मानमवजानीयाद्दीर्घमायुर्जिजीविषुः । ७६ । चिरं संध्योपासनं कुर्यात् । ७७ । न सर्पशस्त्रैः क्रीडेत् । ७८ । अनिमित्ततः खानि न स्पृशेत् । ७९ । परस्य दण्डं नोद्यच्छेत् । ८० । शास्यं शासनार्थं ताडयेत् । ८१ । तं च वेणुदलेन रज्ज्वा वा पृष्ठे । ८२ । देवब्राह्मणशास्त्रमहात्मनां परिवादं परिहरेत् । ८३ । धर्मविरुद्धौ चार्थ-

---

71 om. v. नास्फोटनं कार्यम् । C[1,2]. See the C. 75. किं C[1,2]. 79. स्वानि खानि C[1,2]. 80. नोपयच्छेत् । V[4]. See M. IV, 164. 82. तन्वा C[1,2]; तर v; तं तु Ap. ; तं शास्यमेव N.

---

63. उद्धतानुन्मार्गवर्तिनस्तदनुकूलाचरणेन नोत्साहयेत् ॥ 67. उपसृष्टो व्याध्यभिभूतः ।... 69... वृथाटनादिर्वृथाचेष्टा ॥ 71. दक्षिणांसारोपिते वामबाहौ दक्षिणपाणिना शब्दकरणमास्फोटनम् । न कार्यम् ।... 75. मर्माणि प्राणायतनानि...वक्ष्यमाणानि ( XCVI, 89 ) । तत्र कं चिदपि न स्पृशेन्नाभिहन्यात् । मर्म दुश्चरितं न प्रकाशयेदित्यन्ये ॥ 77. दीर्घायुष्कामः... 78. सर्पो विषधरः ।... 80. परताडनार्थम्... 81. शास्यं शासनार्हं शिष्यपुत्रादिकम् ।... 83... महात्मान ऋषयः ।...

कामौ । ८४ । लोकविद्विष्टं च धर्ममपि । ८५ । पर्वसु शान्तिहोमं कुर्यात् । ८६ । न तृणमपि छिन्द्यात् । ८७ । अलंकृतश्च तिष्ठेत् । ८८ । एवमाचारसेवी स्यात् । ८९ ।

श्रुतिस्मृत्युदितं सम्यग्साधुभिश्च निषेवितम् ।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥ ९० ॥
आचाराल्लभते चायुराचारादीप्सितां गतिम् ।
आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम् ॥ ९१ ॥
सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ९२ ॥ ७१ ॥

---

दमयमेन तिष्ठेत् । १ । दमश्चेन्द्रियाणां प्रकीर्तितः । २ । दान्तस्यायं लोकः परश्च । ३ । नादान्तस्य क्रिया का चित्समृध्यति । ४ ।

दमः पवित्रं परमं मङ्गल्यं परमं दमः ।
दमेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति ॥ ५ ॥

---

90. धर्म्यं $V^4$ N. ; धर्मं $V^{1-3}$. See M. IV, 155.

---

85... लोकनिन्दितम्... 87. पर्वसु... 88. स्रक्चन्दनादिभिरलंकृतस्तिष्ठेत् ।... LXXII, 1. दमोऽन्तःकरणनियमः । यमो बाह्येन्द्रियनियमः ।... 2. अन्तःकरणनियमेन चक्षुरादीन्द्रियाणामपि नियमः प्रसिद्ध एव ॥ 4. ऐहिकी पारलौकिकी वा क्रिया ।...

दशार्धयुक्तेन रथेन यातो
मनोवशेनार्यपथानुवर्तिना ।
तं चेद्रथं नापहरन्ति वाजिन-
स्तथागतं नावजयन्ति शत्रवः ॥ ६ ॥
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७ ॥ ७२ ॥

---

अथ श्राद्धेप्सुः पूर्वेद्युर्ब्राह्मणानामन्त्रयेत् । १ । द्वितीये ऽह्नि शुक्लपक्षस्य पूर्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान्सुस्नातान्स्वाचान्तान्यथाभूयो विद्याक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत् । २ । द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्य उद-

LXXII, 6. याति $C^{1,2}$; याते v. LXXIII, 3. पित्र्ये $V^4$ $C^{1,2}$.

6. दशार्धेन पञ्चभिरिन्द्रियलक्षणैर्वाजिभिर्युक्तेन प्रज्ञालक्षणेन रथेन मनोलक्षणसारथिना वशीकृतेन... यो याति । तं तथा वर्तमानं शत्रवः कामक्रोधादयो नावजयन्ति यदि तं रथं ते वाजिनः सारथिनानुगृहीता नापथे प्रवर्तयन्ति ।... 7... यं प्रविशन्त्यन्तरे प्रलीयन्ते । स एव शान्तिं तितिक्षामेति प्राप्नोति ।... नेतरः । कामकामी । काम्यन्त इति कामा विषयास्तान्कामयितुं शीलमस्य ॥ LXXIII, 2... तैलोद्वर्तनादिना सम्यक्स्नातान् । ... स्वाचान्तानिति नियमेनाचमनप्रतिनिधिनिरासः ।... यथाभूयो यथावयोबाहुल्यम् ।...

ञ्जुखान् । ३ । एकैकमुभयत्र वेति । ४ । आमश्राद्धेषु काम्येषु च प्रथमपञ्चकेनाग्निं हुत्वा । ५ । पशुश्राद्धेषु मध्यमपञ्चकेन । ६ । अमावास्यासूत्तमपञ्चकेन । ७ । आग्रहायण्या ऊर्ध्वं कृष्णाष्टकासु च क्रमेणैव प्रथममध्यमोत्तमपञ्चकैः । ८ । अन्वष्टकासु च । ९ । ततो ब्राह्मणानुज्ञातः पितॄनावाहयेत् । १० । अपयन्त्वसुरा इति द्वाभ्यां तिलैर्यातुधानानां विसर्जनं कृत्वा । ११ । एत पितरः सर्वांस्तानग्न आ मे यन्त्वेतद्वः पितर इत्यावाहनं कृत्वा कुशतिलमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति च पाद्यं निर्वर्त्य निवेद्यार्घ्यं कृत्वा निवेद्य च कुशतिलवस्त्रपुष्पालंकारधूपदीपैर्यथा-

---

LXXIII, 11. अपयान्त्वसुरा इति श्राद्धविघ्नकर्तॄन्यातुधानानपसार्य तिलैर् $V^{1-3}$ $C^{1,2}$. See the C., from which the second clause has crept in.

---

5. कृणुष्व पाजेति (to read इयमेवेति. See Kâṭhaka XXXIX, 10, and Kâṭh. Gṛihyas.) रक्षोघ्नं पञ्चदशर्चं सूक्तं काठके प्रसिद्धम् । तस्याद्येन पञ्चकेन... वैश्वदेविकपूजानन्तरं पित्रावाहनात्पूर्वमेवाग्निहोमः कार्यः ।... 10. काठकीयश्राद्धप्रयोगमाह । ततो होमानन्तरं वक्ष्यमाणरीत्या यातुधानानपसार्य ब्राह्मणान्पितॄनावाहयिष्य इत्यनुज्ञाप्यावाहयेति तैरनुज्ञातः पितॄनावाहयेत् ।... 11. उक्तहोमसमाप्त्यनन्तरमपयन्त्वित्ति मन्त्रद्वयेन तिलैः श्राद्धविघ्नकर्तॄन्यातुधानानपसार्यावाहयेत् । मन्त्रावाहनादिक्रममाह ॥

शक्त्या विप्रान्समभ्यर्च्य घृतप्लुतमन्नमादायादित्या रुद्रा वसव इति वीक्ष्याग्नौ करवाणीत्युक्त्वा तत्र विप्रैः कुर्वित्युक्ते आहुतित्रयं दद्यात् । १२ । ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति च हविरनुमन्त्रणं कृत्वा यथोपपन्नेषु पात्रेषु विशेषाद्रजतमयेष्वन्नं नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् । १३ । पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु । १४ । तददत्सु ब्राह्मणेषु यन्मे प्रकामादहोरात्रैर्यद्वः

---

12. The Mantras in this and the following Sûtras appear to have been corrupted already in Nandapaṇḍita's time, and have been corrected with the aid of the Kâṭh. Gṛihyas. निवेद्य चानुलेपनं V[4]; नि० चा० कृत्वा V[1–3] C[1,2]v. The clause चा० कृ० is not commented on by N., and not found in the Kâṭh. Gṛihyas. वृतप्लुतमन्नम्० V[1–3]; वृतष्टुतमन्नम् C[1,2]; घृत०-आदाय om. v. उक्त C[1,2]; उक्तै V[1].

---

12. उक्तप्रतीकेन मन्त्रेणावाहनमुक्तप्रतीकाभ्यां मन्त्राभ्यां पाद्यमासादनादिभिरर्घ्यं संपाद्य निवेद्य गन्धा-(कुशा० ?) दिदीपान्तैर्यथोक्तप्रकारेण शक्त्या देवपितृब्राह्मणान्संपूज्य गृहीतमन्नमादित्येति मन्त्रेणावेक्ष्य पृष्टोत्तरे लब्धे... सोमाय पितृमते स्वधा नमो यमायाङ्गिरसे स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति मन्त्रत्रयेणाहुतित्रयं जुहुयात् ॥ 13. ये मामकाः...इति त्रिभिर्मन्त्रैरनुमन्त्र्य यथामिलितेषु सौवर्णेषु दैवे राजतेषु पित्र्ये वा नम इति मन्त्रेण वैश्वदेविकयोर्ब्राह्मणयोः प्रथमं निवेदयेत्। तच्चोपवीतिना कार्यम् । ... 14...ततश्चामुकशर्मणेऽस्मत्पित्रेऽमुकगोत्राय वसुरूपायेदमन्नं स्वधा नम इति वाक्यप्रयोगेणान्नं निवेदयेत् ।... 15. तन्निवेदितमन्नमदत्सु भुञ्जानेषु ब्राह्मणेषु देवपितृब्राह्मणेषु...

क्रव्यादिति जपेत् । १५ । इतिहासपुराणधर्मशास्त्राणि चेति । १६ । उच्छिष्टसंनिधौ दक्षिणाग्रेषु दर्भेषु पृथिवी दर्विरक्षतेत्येकं पिण्डं पित्रे निदध्यात् । १७ । अन्तरीक्षं दर्विरक्षतेति द्वितीयं पितामहाय । १८ । द्यौर्दर्विरक्षतेति तृतीयं प्रपितामहाय । १९ । येऽत्र पितरः प्रेता इति वासो देयम् । २० । वीराञ्चः पितरो धत्त इत्यन्नम् । २१ । अत्र पितरो मादयध्वं यथाभागमावृषयध्वमिति दर्भमूले करावघर्षणम् । २२ । ऊर्जं वहन्तीरित्यनेन सोदकेन प्रदक्षिणं पिण्डानां विकिरणं कृत्वा अर्घपुष्पधूपालेपनान्नादिभक्ष्यभोज्यानि निवेदयेत् । २३ । उदकपात्रं मधुघृततिलैः संयुक्तं च । २४ । भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मा मे क्षेष्ठेत्यन्नं सतृणमभ्युक्ष्यान्नविकिरमुच्छिष्टाग्रतः कृत्वा तृप्ता भवन्तः संपन्नमिति पृष्ट्वोदङ्मुखेष्वाचमनमादौ दत्त्वा ततः प्राङ्मुखेषु दत्त्वा

---

22. करघर्षणं C[1,2]. 23. विकिरणं सेचनं...च निवेदयेत् । C[1,2] 24. उदकपात्रं च C[1,2].

---

20...पिण्डोपरि वस्त्रं दद्यात् ॥ 22...पिण्डाधःस्थितदर्भमूले करलेपावघर्षणं कुर्यात् ॥ 23...सोदकेन पिण्डशेषेण...विकिरणं सेचनं कृत्वार्घादीन्पञ्च भोज्यान्तान्निवेदयेत् ॥ 24.... चकारादञ्जनाभ्यञ्जनादीनि ।... 25....श्राद्धशेषमन्नं सतृणं कुशसहितं जलेनाभ्युक्ष्य तस्यान्नस्य

ततश्च सुप्रोक्षितमिति श्राद्धदेशं संप्रोक्ष्य दर्भपाणिः सर्वं कुर्यात् । २५ । ततः प्राङ्मुखाग्रतो यन्मे राम इति प्रदक्षिणं कृत्वा प्रत्येत्य च यथाशक्ति दक्षिणाभिः समभ्यर्च्याभिरमन्तु भवन्त इत्युक्त्वा तैरुक्तोऽभिरताः स्म इति देवाश्च पितरश्चेत्यभिजपेत् । २६ । अक्षय्योदकं च नामगोत्राभ्यां दत्त्वा विश्वे देवाः प्रीयन्तामिति प्राङ्मुखेभ्यस्ततः प्राञ्जलिरिदं तन्मनाः सुमना याचेत । २७ ।

दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥ २८ ॥
तथास्त्विति ब्रूयुः । २९ ।
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कं च न ॥ ३० ॥
इत्येताभ्यामाशिषः प्रतिगृह्य । ३१ ।

---

ब्राह्मणोच्छिष्टाग्रतो विकिरणं कृत्वा... श्राद्धदेशं प्रोक्षेत् । इदं च सर्वं दर्भपाणिना कार्यम् । 26. रामः काकः ( Dev., Kâṭhakagṛihya-bhâshya )... 27. यद्दत्तमन्नोदकादि तदक्षय्यमस्त्विति दैवे पित्र्ये च नामगोत्राभ्यामुदकं दत्त्वा विश्वे देवाः प्रीयन्तामिति दैवे चोदकं दत्त्वा... आशिषो याचेत । ता एवाह ॥ 28. नोऽस्माकं कुले दातारो दानशीलाः पुरुषा वेदाध्ययनाध्यापनाविच्छेदेन वर्धन्तां संततिश्च पुत्रपौत्रपरंपरा वर्धताम् ।... देयं चान्नपानाद्यस्माकं कुले बहुलमस्त्विति याचेत ॥ 29. ते च याचितास्तथास्त्विति प्रतिब्रूयुः ॥ 31. इत्युक्ताभ्यां...मन्त्राभ्यामुक्ता आशिषस्तथास्त्विति प्रतिवचनेन प्रतिगृह्य विप्रान्विसर्जयेत् ॥

वाजे वाज इति ततो ब्राह्मणांश्च विसर्जयेत् ।
पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च ॥ ३२ ॥ ७३ ॥

---

अष्टकासु दैवपूर्वं शाकमांसापूपैः श्राद्धं कृत्वा त्वन्वष्टकास्वष्टकावद्धुह्वौ दैवपूर्वमेवं हुत्वा मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान्भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्जयेत् । १ । ततः कर्षूः कुर्यात् । २ । तन्मूले प्रागुदगग्न्युपसमाधानं कृत्वा पिण्डनिर्वपणम् । ३ । कर्षूत्रयमूले पुरुषाणां कर्षूत्रयमूले स्त्रीणाम् । ४ । पुरुषकर्षूत्रयं सान्नेनोदकेन पूरयेत् । ५ । स्त्रीकर्षूत्रयं सान्नेन पयसा । ६ । दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयम् ।७। पूरयित्वा जपेदेतद्भवद्भ्यो भवतीभ्योऽस्तु चाक्षयम् ॥ ८ ॥ ७४ ॥

---

पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्या-

---

LXXIV, 1. कृत्वा om. $C^{1,2}$. कृत्वान्वष्टकावद्धुह्विं कृत्वा दैवपूर्वं मात्रे v. 8. एतद्भवद्भ्यो om. $C^{1,2}$v. See the Kâṭh. Gṛihyas.

---

32... आ सीमान्तमनुव्रज्य... LXXIV, 1... यथाक्रमं शाकमांसापूपैः ।... यथोक्तविधिना श्राद्धं कृत्वा परेद्युरन्वष्टकास्वष्टकावद्यस्यामष्टकायां येन पञ्चकेन होमस्तेनैवान्वष्टकास्वपि होमः ।... 8. एवं नवापि कर्षूस्तत्तद्द्रव्येण पूरयित्वा एतद्भवद्भ्य इत्यादि मन्त्रं जपेत् ॥

त्तेषां कुर्यात्। १। पितरि पितामहे च जीवति येषां पितामहः। २। पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। ३। यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्। ४। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्। ५। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्। ६।

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।
मन्त्रोहेण यथान्यायं शेषाणां मन्त्रवर्जितम् ॥७॥ ७५ ॥

---

LXXV, 2. C[1,2] add कुर्यात्तेषां पिता कुर्यात्। From the C. 3. त्रिषु जीवत्सु नैव कुर्यात्। C[1,2]. From the C. 4. प्रपितामहात् C[1,2]. पूर्वं for परं v. 5, 6 om. v. 6. यस्य-पिण्डं om. V[1-2]. स्यात् om. V[4]. After 6, C[1,2] add the following Sûtra, यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्। See Sûtra 4.

---

LXXV, 3...पित्रादिषु त्रिषु जीवत्सु श्राद्धमेव न कुर्यात् ॥ 4. मृतपितृको जीवत्पितामहकश्च पितृपिण्डं दत्वा प्रपितामहवृद्धपितामहाभ्यां पिण्डं दद्यात्।... 6. यो जीवत्पितृप्रपितामहकः स पितामहपिण्डं दत्वा वृद्धप्रपितामहतत्पित्रोः पिण्डं दद्यात्।... 7... तत्र मातामहे जीवति तत्पितृणामेव।... यथान्यायं प्रथमान्ते प्रथमान्तं द्वितीयान्ते द्वितीयान्तमित्यादिप्रकारेण मातामहशब्दस्योहेन कार्यम्।... शेषाणां पितृव्यमातुलभ्रात्रादीनां श्राद्धममन्त्रकमेव पितृपदवन्मन्त्ररहितमेव कुर्यात्।...

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति । १ ।
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ २ ॥ ७६ ॥

---

आदित्यसंक्रमणम् । १ । विषुवद्द्वयम् । २ । विशेषेणायनद्वयम् । ३ । व्यतीपातः । ४ । जन्मर्क्षम् । ५ ।
अभ्युदयश्च । ६ ।
एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्प्यते ॥ ७ ॥
संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥ ८ ॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते ॥ ९ ॥ ७७ ॥

---

सततमादित्येऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति । १ ।
सौभाग्यं चान्द्रे । २ । समरविजयं कौजे । ३ । सर्वान्का-

---

LXXVI, 1... व्रीहिपाकः शरत् । यवपाको वसन्तः ।... LXXVII, 5. आत्मनः पुत्रस्य भार्यायाश्च जन्मनक्षत्रम् ।... 6. अभ्युदयः पुत्रजन्मादिः ।... 7... तत्र कृतं श्राद्धं पितॄणां यावच्चन्द्रतारकावस्थानमुपतिष्ठते कर्तुश्च सर्वगुणातिशयवत्सर्वकामसाधनं भवतीति ॥ LXXVIII, 1. आदित्यवारे श्राद्धं सार्वकालिकारोग्यहेतुः ॥ 2. चन्द्रवारे सौभाग्यं जनप्रियत्वम् ॥

मान्बौधे । ४ । विद्यामभीष्टां जैवे । ५ । धनं शौक्रे । ६ । जीवितं शनैश्चरे । ७ । स्वर्गं कृत्तिकासु । ८ । अपत्यं रोहिणीषु । ९ । ब्रह्मवर्चस्यं सौम्ये । १० । कर्मसिद्धिं रौद्रे । ११ । भुवं पुनर्वसौ । १२ । पुष्टिं पुष्ये । १३ । श्रियं सार्पे । १४ । सर्वान्कामान्पैत्र्ये । १५ । सौभाग्यं भाग्ये । १६ । धनमार्यमणे । १७ । ज्ञातिश्रैष्ठ्यं हस्ते । १८ । रूपवतः सुतांस्त्वाष्ट्रे । १९ । वाणिज्यसिद्धिं स्वातौ । २० । कनकं विशाखासु । २१ । मित्राणि मैत्रे । २२ । राज्यं शाक्रे । २३ । कृषिं मूले । २४ । समुद्रयानसिद्धिमाप्ये । २५ । सर्वान्कामान्वैश्वदेवे । २६ । श्रैष्ठ्यमभिजिति । २७ । सर्वान्कामाञ्छ्रवणे । २८ । लवणं वासवे । २९ । आरोग्यं वारुणे । ३० । कुप्यद्रव्यमाजे । ३१ । गृहमाहिर्बुध्न्ये । ३२ । गाः पौष्णे । ३३ । तुरङ्गमाश्विने । ३४ । जीवितं याम्ये । ३५ । गृहं सुरूपाः स्त्रियः प्रतिपदि । ३६ । कन्यां वरदां द्वितीयायाम् । ३७ ।

LXXVIII, 5. जीवे C[1,2]v. 10. ब्रह्मवर्चः v. 14. सर्पे C[1,2]. 15. पैत्रे C[1,2]. 25—53 om. v.

10. सौम्यं मृगशिरः । तस्मिन्ब्रह्मवर्चस्यं ब्रह्मतेजः । ओजो वा ॥ 11. कर्मणामैहिकानां सिद्धिः फलप्राप्तिः । शौर्यं वा । रौद्रमार्द्रा ॥ 14. सार्पमाश्लेषास्तत्र शोभाम्... 18. ज्ञातिषु सपिण्डेषु ज्ञातिश्रेष्ठत्वम् ॥ 29... लवणं लवणक्रियासिद्धिः ।... 37. वरदामभीष्टप्रदाम् । कन्यां जामातॄंश्च ॥

सर्वान्कामांस्तृतीयायाम् । ३८ । पशूंश्चतुर्थ्याम् । ३९ । सुरूपान्सुतान् पञ्चम्याम् । ४० । द्यूतविजयं षष्ठ्याम् । ४१ । कृषिं सप्तम्याम् । ४२ । वाणिज्यमष्टम्याम् । ४३ । पशून्नवम्याम् । ४४ । वाजिनो दशम्याम् । ४५ । ब्रह्मवर्चस्विनः पुत्रानेकादश्याम् । ४६ । कनकरजतं द्वादश्याम् । ४७ । सौभाग्यं त्रयोदश्याम् । ४८ । सर्वकामान्पञ्चदश्याम् । ४९ । शस्त्रहतानां श्राद्धकर्मणि चतुर्दशी शस्ता । ५० । अपि पितृगीते गाथे भवतः । ५१ ।
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्काले ऽसिते पक्षे त्रयोदश्यां समाहितः ॥ ५२ ॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।
कार्त्तिकं सकलं मासं प्राक्छाये कुञ्जरस्य च ॥५३॥ ७८॥

---

अथ न नक्तं गृहीतेनोदकेन श्राद्धं कुर्यात् । १ ।

---

40, 41 T. and C. om. V[1,3]. 40. श्रियं पञ्चम्याम् । C[1,2]. LXXIX, 1—12 om. v.

---

42. कृषिं कृषिफलम् ॥ 43. वाणिज्यं क्रयविक्रयफलम् ॥ 53... कार्त्तिकं सकलं मासं... यः श्राद्धं दद्यात् । सोऽप्यस्मत्कुले जायेतेति कालान्तरमपि पित्रभीष्टमुक्तम् ।...प्राचि छाया प्राक्छायं ।... प्राक्छाया वापराह्णे भवति । तत्रापि पितरो मधुपायसेन श्राद्धमिच्छन्ति ।...

कुशाभावे कुशस्थाने काशान्दूर्वां वा दद्यात् । २ । वासोऽर्थे कार्पासोत्थं सूत्रम् । ३ । दशां विवर्जयेद्यद्यप्यहृतवस्त्रजा स्यात् । ४ । उग्रगन्धीन्यगन्धीनि कण्टकिजानि रक्तानि च पुष्पाणि । ५ । शुक्लानि सुगन्धीनि कण्टकिजान्यपि जलजानि रक्तान्यपि दद्यात् । ६ । वसां मेदं च दीपार्थे न दद्यात् । ७ । घृतं तैलं वा दद्यात् । ८ । जीवजं सर्वधूपार्थे न दद्यात् । ९ । मधुघृतसंयुक्तं गुग्गुलुं दद्यात् । १० । चन्दनकुङ्कुमकर्पूरागुरुपद्मकान्यनुलेपनार्थे । ११ । न प्रत्यक्षलवणं दद्यात् । १२ । हस्ते न च घृतव्यञ्जनादि । १३ । तैजसानि पात्राणि दद्यात् । १४ । विशेषतो राजतानि । १५ । खड्गकुतपकृष्णाजिनतिलसिद्धार्थकाक्षतानि च पवित्राणि रक्षोघ्नानि च निदध्यात् । १६ ।

---

3. वाससो $C^{1,2}$. 5. कण्टकितानि $V^{1-4}$; कण्टकिजातानि $C^{1,2}$; कण्टकिजानि Ap. See 6, and LXVI, 7, 8. Arrangement of the following sections in v : LXXX, 2—14; LXXXI, 3—15; LXXIX, 13—42; LXXX, 1 ( excepting प्रीयन्ते ); LXXX, 1, 15—LXXXI, 23 ( LXXXI, 3—15 being repeated ). 16. चेति दद्यात् । $C^{1,2}$.

---

LXXIX, 3. वासोऽभावे तत्कार्ये कार्पाससंभवं सूत्रं देयम् ।... 9. जीवजं नखशृङ्गादि ।... 13....आदिशब्दाद्दधिपायसादि च । हस्ते न देयं किंतु दर्व्यादिना ।... 16. पार्णराजतताम्रपात्राणि...एतानि पवित्राणि । रक्षोघ्नानि वक्ष्यमाणानि ।...

पिप्पलीमुकुन्दकभूस्तृणशिग्रुसर्षपसुरसासर्जकसुवर्चलकूष्माण्डालाबुवार्ताकुपालक्योपोदकीतण्डुलीयककुसुम्भपिण्डालुकमहिषीक्षीराणि वर्जयेत् । १७ । राजमाषमसूरपर्युषितकृतलवणानि च । १८ । कोपं परिहरेत् । १९ । नाश्रु पातयेत् । २० । न त्वरां कुर्यात् । २१ । घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि फल्गुपात्राणि च प्रशस्तानि । २२ । अत्र च श्लोको भवति । २३ ।

सौवर्णराजताभ्यां च खाड्गेनौदुम्बरेण च ।
दत्तमक्षय्यतां याति फल्गुपात्रेण चाप्यथ ॥ २४ ॥७९॥

---

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुभिर्नीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्ते । १ । द्वौ मासौ मत्स्यमांसेन । २ । त्रीन्हारिणेन । ३ । चतुरश्चौरभ्रेण । ४ । पञ्च शाकुनेन । ५ । षट्छागेन । ६ । सप्त रौरवेण । ७ । अष्टौ पार्षतेन । ८ । नव गावयेन । ९ । दश माहिषेण । १० । एकादश तूपरेणाजेन । ११ ।

---

17. ०पालङ्क्योपोटकी० $C^{1,2}$. 24. खड्गेनौ० $C^{1,2}$. LXXX, 11. एकादश कौर्मेण । $C^{1,2}$.

---

18. कृतं कृत्रिमं लवणम् ।... 22. आदिशब्दाद्व्यञ्जनदधिपायसादि ।... 24. औदुम्बरं ताम्रम् ।... LXXX, 1. मत्स्याः सिंहतुण्डकादयः ।... 5. शकुनः पक्षी लावातिरिक्तादिर्भक्ष्यः ॥

संवत्सरं गव्येन पयसा तद्विकारैर्वा । १२ । अत्र पितृगीता गाथा भवति । १३ ।

कालशाकं महाशल्कं मांसं वार्ध्रीणसस्य च ।
विषाणवर्ज्या ये खड्गास्तांस्तु भक्षामहे सदा ॥ १४ ॥८०॥

---

नान्नमासनमारोपयेत् । १ । न पदा स्पृशेत् । २ । नावक्षुतं कुर्यात् । ३ । तिलैः सर्षपैर्वा यातुधानान्विसर्जयेत् । ४ । संवृते न श्राद्धं कुर्यात् । ५ । न रजस्वलां पश्येत् । ६ । न श्वानम् । ७ । न विड्वराहम् । ८ । न ग्रामकुक्कुटम् । ९ । प्रयत्नाच्छ्राद्धमजस्य दर्शयेत् । १० । अश्नीयुर्ब्राह्मणाश्च वाग्यताः । ११ । न वेष्टितशिरसः । १२ । न सोपानत्काः । १३ । न पीठोपहितपादाः ।१४। न हीनाङ्गाधिकाङ्गाः श्राद्धं पश्येयुः । १५ । न शूद्राः । १६ । न पतिताः । १७ । तत्कालं ब्राह्मणं ब्राह्मणानु-

---

14. वाध्रीणसस्य $V^{1-4}$ $C^{1,2}$ N. See, however, M, III, 271; Y. I, 259; Apast. II, 17, 3; Gaut. XV, 15. खड्गा आसूर्यं तांस्तु भुंचमहे ॥ $V^{1-4}$ N. LXXXI, 3—22 om. $V^{1-3}$ $C^{1,2}$; but 23 is marked २३ in $V^{1-3}$, just as it is in $V^4$. 13. सोपानत्कः $V^4$; सापान V.

---

LXXXI, 6. कर्ता भोक्ता चोदक्यां न पश्येत् । ... 18. श्राद्धकाले समागतं ब्राह्मणं संन्यासिनं वा नियुक्ताश्चेदनुमन्येयुस्तदा तमपि भोजयेत् ॥

मतेन वा भिक्षुकं भोजयेत् । १८ । हविर्गुणान्न ब्राह्मणा ब्रूयुर्दात्रा पृष्टाः । १९ ।

यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ २० ॥
सार्ववर्णिकमन्नाद्यं संनीयाप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि ॥ २१ ॥
असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥ २२ ॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ २३ ॥ ८१ ॥

---

दैवे कर्मणि ब्राह्मणं न परीक्षेत । १ । प्रयत्नात्पित्र्ये परीक्षेत । २ । हीनाधिकाङ्गान्विवर्जयेत् । ३ । विकर्म-

---

18. पूजयेत् । V[4]. 22. रोगिणां कुलयोषिताम् । V[4]v. See N.'s gloss, which seems to be an erroneous interpretation of the reading त्यागिनां कुलयोषिताम् , which is found M. III, 245.

---

21. सार्ववर्णिकं सर्वजातीयमन्नमाद्यशब्दाच्छाकादिकमप्यादाय जलेनाप्लाव्य भुक्तवतामग्रे भुवि न पात्रे विकिरन्नपिण्डत्वेन पातयेत् ॥ 22. विकिरदेवता आह ।... योऽयमुक्तो विकिरो यच्च भोजनावशिष्टं विप्राणां तदुभयमनुपनीतानां कुलस्त्रीणां च त्यक्तानां भागधेयम् ।... LXXXII, 4. श्रुतिस्मृतिविरुद्धं कर्म विकर्म ।...

वैडालव्रतिकान् ।५। वृथालिङ्गिनः । ६ ।
: ।७। देवलकांश्च ।८। चिकित्सकान्
पुत्रान् । १० । तत्पुत्रान् । ११ । बहुया-
। ग्रामयाजिनः । १३ । शूद्रयाजिनः । १४ ।
तिनः । १५ । व्रात्यान् । १६ । तद्याजिनः
ारान् । १८ । सूचकान् । १९ । भृतकाध्या-
। भृतकाध्यापितान् । २१ । शूद्रान्नपुष्टान्
तसंसर्गान् । २३ । अनधीयानान् । २४ ।
भ्रष्टान् । २५ । राजसेवकान् । २६ । नग्नान्
श्च विवदमानान् । २८ । पितृमातृगुर्वग्नि-
ागिनश्चेति । २९ ।

ा ह्येते कथिताः पङ्क्तिदूषकाः ।
येच्यत्नाच्छ्राद्धकर्मणि पण्डितः ॥ ३० ॥ ८२ ॥

---

I, 25. संध्योपासनानानुस्थान् । $C^{1,2}$. 28. om. $C^{1,2}$; om $V^{1,2}$; विवदमानानपि । v. 30. विवर्जयेच्छेषा- वर्जयेच्चापि श्राद्ध° v.

---

स्त्रातिक्रमेण लिङ्गं संन्यास्याद्याश्रमचिह्नं येषां ते ।··· 15. ादयः ।··· 16. संस्कारहीनान् ॥ 22. निरन्तरं शूद्रान्न- येऽधीतमपि वेदं प्रत्यहं नाधीयन्ते तान् ॥ 30. ब्राह्म- हेष्कृता अत एव पङ्क्तिदूषकाः कथिताः पूर्वर्षिभिः ।...

अथ पङ्क्तिपावनाः । १ । त्रिणाचिकेतः । २ । पञ्चाग्निः । ३ । ज्येष्ठसामगः । ४ । वेदपारगः । ५ । वेदाङ्गस्याप्येकस्य पारगः । ६ । पुराणेतिहासव्याकरणपारगः । ७ । धर्मशास्त्रस्याप्येकस्य पारगः । ८ । तीर्थपूतः । ९ । यज्ञपूतः । १० । तपःपूतः । ११ । सत्यपूतः । १२ । मन्त्रपूतः । १३ । गायत्रीजपनिरतः । १४ । ब्रह्मदेयानुसंतानः । १५ । त्रिसुपर्णः । १६ । जामाता । १७ । दौहित्रश्चेति पात्रम् । १८ । विशेषेण च योगिनः । १९ । अत्र पितृगीता गाथा भवति । २० ।

अपि स स्यात्कुलेऽस्माकं भोजयेद्यस्तु योगिनम् ।
विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम् ॥ २१ ॥८३॥

---

न म्लेच्छविषये श्राद्धं कुर्यात् । १ । न गच्छेन्म्लेच्छविषयम् । २ ।

---

LXXXIII, 18. पात्रम् om. C[1,2]; दाता । v. Ap. has पात्रम्. 19—21, and LXXXIV, excepting a few fragments, om. v. 21. अये C[1,2].

---

LXXXIII, 2. त्रिर्नाचिकेतं चयनं कृतवानसौ त्रिणाचिकेतः । त्रिणाचिकेतसंज्ञं यजुर्वेदभागं तद्व्रतपूर्वकमधीतेऽसौ वा ॥ 13. मन्त्रैर्विष्ण्वादिदैवत्यैर्नित्यं जप्तैः पूतः ।... 15. ब्रह्मदेयं वेदाध्यापनं (० ध्ययनं V[1–3]) तदुपलक्षितः संतानः परंपरा यस्येति । त्रिपुरुषाध्यापकेति यावत् ॥ 16. त्रिसुपर्णं यजुर्भागविशेषमधीतेऽसौ । तथा त्रिः सुपर्णं चितिं कृतवानसौ वा ॥ LXXXIV, 1. वक्ष्यमाणदेशे म्लेच्छदेशे··· 2. तीर्थयात्रां विना म्लेच्छदेशं न गच्छेत् ।

परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छतीति ॥ ३ ॥
चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्यावर्तस्ततः परः ॥ ४ ॥८४॥

---

अथ पुष्करेष्वक्षयं श्राद्धम् । १ । जप्यहोमतपांसि च । २ । पुष्करे स्नानमात्रात्सर्वपापेभ्यः पूतो भवति । ३ । एवमेव गयाशीर्षे । ४ । वटे । ५ । अमरकण्टकपर्वते । ६ । वराहपर्वते । ७ । यत्र क्वचन नर्मदातीरे । ८ । यमुनातीरे । ९ । गङ्गायां विशेषतः । १० । कुशावर्ते । ११ । बिन्दुके । १२ । नीलपर्वते । १३ । कनखले । १४ । कुब्जाम्रे । १५ । भृगुतुङ्गे । १६ । केदारे । १७ । महा-

---

LXXXV, 1. पुष्करेषु श्राद्धम् । C[1,2]; पुष्करेषु यच्छ्राद्धम् । v. 4. गयाशीर्षे and 5 om. v. 5. अक्षयवटे C[1,2]. From the C. 12. बिल्वके C[1,2]v. See the C. 15. कुजाम्रे । C[1,2].

---

3. परे चातुर्वर्ण्यबहिष्कृता म्लेच्छास्तेषां निपाने जलाशये स्नात्वा पीत्वा तत्साम्यं प्राप्नोति ।... साम्यं च यावज्जीवाभ्यासविषयम् । सकृत्...आपस्तम्बेनोक्तं ज्ञेयम् ।... LXXXV, 5...अक्षयवटे ॥ 7. वराहाकारे पर्वतविशेषे ॥ 11. कुशावर्तस्त्र्यम्बकगिरिस्थो गोदावरीप्रभवः ॥ 12. बिन्दुको दक्षिणदेशस्थतीर्थविशेषः । बिल्वक इति पाठेऽपि तत्रैव सः ॥ 14. कनखलमुत्तरपर्वतस्थं त्र्यम्बकस्थं च ॥ 15. कुब्जाम्रमुत्कलदेशस्थं क्षेत्रं गङ्गाद्वारस्थं वा ॥ 16. भृगुतुङ्गोऽमरकण्टकसमीपस्थो विन्ध्यपादः ॥ 17. केदार उत्तरपर्वतस्थः ॥

लये । १८ । नडन्तिकायाम् । १९ । सुगन्धायाम् । २० । शाकम्भर्याम् । २१ । फल्गुतीर्थे । २२ । महागङ्गायाम् । २३ । त्रिहलिकाग्रामे । २४ । कुमारधारायाम् । २५ । प्रभासे । २६ । यत्र क्वचन सरस्वत्यां विशेषतः । २७ ।

गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥ २८ ॥

अगस्त्याश्रमे । २९ । कण्वाश्रमे । ३० । कौशिक्याम् । ३१ । सरयूतीरे । ३२ । शोणस्य ज्योतिषायाश्च संगमे । ३३ । श्रीपर्वते । ३४ । कालोदके । ३५ । उत्तरमानसे । ३६ । वडवायाम् । ३७ । मतङ्गवाप्याम् । ३८ ।

---

24. त्रिहलिकाश्रमे C[1,2]. See the C. 28 is divided into five Sûtras by N.; but the Mitâksharâ quotes it as a S'loka.

---

18. महालयः पर्वतविशेषः ॥ 19. नडन्तिका [ नडिन्तिका ] नद्यभियुक्तेभ्यो ज्ञेया ॥ 20. सुगन्धा नदी सौगन्धिकनगसमीपस्था ॥ 22. फल्गुतीर्थं गयास्थम् ॥ 24. त्रिहलिकाग्रामः शालग्रामः । तण्डुलिकाश्रम इति वा पाठः ॥ 25. काश्मीरदेशे क्रौञ्चपर्वते कुमारशक्तिप्रहारेण जलधारा निर्गतास्ति सा कुमारधारा तस्याम् । दक्षिणसमुद्र इषुपातक्षेत्रे वा ॥ 26. द्वारकासमीपे प्रभासतीर्थम् ॥ 29. अगस्त्याश्रमः पुष्करसमीपे सरस्वतीतीरे ।... दक्षिणदेशे स्वामिस्थाने वा ॥ 30. कण्वाश्रमो मालिनीतीरे ॥ 33...तयोः संगमो विन्ध्यमध्ये । शोणज्योतीरथयोरिति पाठेऽपि तत्रैव ॥ 34. श्रीपर्वतो दक्षिणदेशस्थः श्रीशैलो मल्लिकार्जुनस्थानम् ॥ 35. कालोदकं यामुनस्तीर्थविशेषः ।... 36. उत्तरमानसं केदारोत्तरपर्वतस्थम् ॥ 37. वडवा तीर्थविशेषो दक्षिणदेशस्थः ॥ 38. मतङ्गवापी गयादक्षिणभागस्था ॥

सप्तार्षे । ३९ । विष्णुपदे । ४० । स्वर्गमार्गपदे । ४१ । गोदावर्याम् । ४२ । गोमत्याम् । ४३ । वेत्रवत्याम् । ४४ । विपाशायाम् । ४५ । वितस्तायाम् । ४६ । शतद्रुतीरे । ४७ । चन्द्रभागायाम् । ४८ । इरावत्याम् । ४९ । सिन्धोस्तीरे । ५० । दक्षिणे पञ्चनदे । ५१ । औसजे । ५२ । एवमादिष्वथान्येषु तीर्थेषु । ५३ । सरिद्वरासु । ५४ । सर्वेष्वपि स्वभावेषु । ५५ । पुलिनेषु । ५६ । प्रस्रवणेषु । ५७ । पर्वतेषु । ५८ । निकुञ्जेषु । ५९ । वनेषु । ६० । उपवनेषु । ६१ । गोमयेनोपलिप्तेषु गृहेषु । ६२ । मनोज्ञेषु । ६३ । अत्र च पितृगीता गाथा भवन्ति । ६४ ।

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥ ६५ ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्यात्समाहितः ॥ ६६ ॥

---

52. औसजे $V^{1-4}$ N.; औजसे $C^{1,2}$v. 62. गोमयलिप्तेषु । $C^{1,2}$.

---

39. सप्तार्षे सप्तर्षितीर्थम् ॥ 40. विष्णुपदं गयामध्यस्थितम् ॥ 41. स्वर्गमार्गो रथमार्ग इति पदशाला... 51. कृष्णावेणातुङ्गभद्राकोणानां पञ्चानां नदीनां समाहारदेशे ॥ 52. औसजं शूर्पारकं दक्षिणदेशस्थं तीर्थम् ॥ 55. स्वभावा रघुनाथश्रीकृष्णादीनां जन्मस्थानानि तेष्वपि सर्वेषु ॥ 59. निकुञ्जा वृन्दावनवर्तीनि । भगवत्क्रीडास्थानानि लतागृहाणि ॥ 63. मनोज्ञास्तुलसीचत्वरादयः ॥ 65...शीतला हिमवत्प्रभवाः ।...

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥६७॥८५॥

---

अथ वृषोत्सर्गः । १ । कार्त्तिक्यामाश्वयुज्यां वा । २ । तत्रादावेव वृषभं परीक्षेत । ३ । जीवद्वत्सायाः पयस्विन्याः पुत्रम् । ४ । सर्वलक्षणोपेतम् । ५ । नीलम् । ६ । लोहितं वा मुखपुच्छपादशृङ्गशुक्लम् । ७ । यूथस्याच्छादकम् । ८ । ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं पयसा श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा वृषमयस्कारस्त्वङ्कयेत् । ९ । एकस्मिन्पार्श्वे चक्रेणापरस्मिन्पार्श्वे शूलेन । १० । अङ्कितं च हिरण्यवर्णा इति चतसृभिः शं नो देवीरिति च स्नापयेत् । ११ । स्नातमलंकृतं स्नातालंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान्पुरुषसूक्तं कूष्माण्डीश्च

---

LXXXVI, 9. रतिर् all; रडिर् Ap. and Kâṭh. Grihyas, 11. देवीति $V^{1-4}$ $C^{1,2}$v; देवीरिति N. Ap. See Rigv. X, 9, 4.

---

67. बहूनां पुत्राणां मध्ये एकेनापि गयाश्राद्धकरणे पितृमुक्तिर्भवति... LXXXVI, 5... लक्षणान्यङ्गानि तैः सर्वैर्युक्तम् ।... 9...गवां मध्ये गोष्ठ इति देशविधिः ।... आहुतिद्वयं हुत्वा... 10. दक्षिणबाहौ चक्रेण वामस्फिजि त्रिशूलेन... 12... रुद्रान्नमस्ते रुद्र मन्यव इत्येकादशानुवाकान् ।...

जपेत् । १२ । पिता वत्सानामिति वृषभस्य दक्षिणे कर्णे पठेत् । १३ । इमं च । १४ ।

वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि तमहं भक्त्या स मे रक्षतु सर्वतः ॥ १५ ॥

एतं युवानं पतिं वो ददामि
तेन क्रीडन्तीश्चरत प्रियेण ।
मा हास्महि प्रजया मा तनूभि-
र्मा रधाम द्विषते सोम राजन् ॥ १६ ॥

वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि ।
होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च ॥ १७ ॥
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ।

---

13. वत्सेति $V^{1-4}$ $C^{1,2}v$ Ap.; पिता वत्सेति काठकीयो मन्त्रः N. See Kâṭh XIII, 9; Kâṭh. Gṛihyas., etc. 16. ददाम्य० and चरथ $V^{1-4}$ $C^{1,2}v$ Ap. The Kâṭh. Gṛihyas. has the same readings; but the Atharva and Taittirîya (III, 3, 9, 1) Samhitās [ see also the Gṛihyasûtras of Pâraskara ( III, 9, 6 ) and Sâṅkhâyana ( III, 11, 14 ) ] have ददामि तेन and चरत. महामाह $C^{1,2}$.

---

16... हे राजन्...वयं प्रजया संतत्या तनूभिस्तच्छरीरैश्च मा हास्महि मा ह्यसक्ता भवेम द्विषते शत्रवे च मा रधाम मा वश्या भवेम ॥ ( हे सोम राजन्वयं प्रजया पुत्रादिकया मा हास्महि प्रजया शून्या मा भूम... तथा तनूभिः शरीरैर्मा हास्महि दीर्घायुषः स्यामे-त्यर्थः ।... Devapāla ).

भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत् ॥ १८ ॥
उत्सृष्टो वृषभो यस्मिन्पिबत्यथ जलाशये ।
जलाशयं तत्सकलं पितॄंस्तस्योपतिष्ठति ॥ १९ ॥
शृङ्गेणोल्लिखते भूमिं यत्र क्वचन दर्पितः ।
पितॄणामन्नपानं तत्प्रभूतमुपतिष्ठति ॥ २० ॥ ८६ ॥

---

अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सुवर्णशृङ्गं रौप्यखुरं मौक्तिकलाङ्गूलभूषितं कृत्वा आविके च वस्त्रे प्रसारयेत् । १ । ततस्तिलैः प्रच्छादयेत् । २ । सुवर्णनाभिं च कुर्यात् । ३ । अहतेन वासोयुगेन प्रच्छादयेत् । ४ । सर्वगन्धरत्नैश्चालंकृतं कुर्यात् । ५ । चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुघृतपूर्णानि निधायाहिताग्नये ब्राह्मणायालंकृताय वासोयुगेन प्रच्छा-

---

20. अधितिष्ठति ॥ $V^4$; उपतिष्ठति ॥ $V^{1-3}$ $C^{1,2}$v Ap. N. has तिष्ठति in $V^4$; उपतिष्ठति in $V^{1-3}$. LXXXVII, 1. सशृङ्गं सखुरं $V^{1\ 4}$; but see the C. वस्त्रे च $C^{1,2}$; च om. v. 6. तैजसपात्राणि $C^{1,2}$v.

---

18. अङ्कयितुः... वेतनं प्रभूतघृतभोजनं च दद्यात् । एतत्कर्मसाद्गुण्याय त्रीन्ब्राह्मणान्भोजयेत् ।... 19. तस्योत्स्रष्टुः पितॄनुपतिष्ठति... LXXXVII, 1... दशसौवर्णिकहेमघटितशृङ्गद्वयं पञ्चपलरौप्यघटितचतुःखुरम् ।... 3. ...सुवर्णनाभिं नेत्रे च कुर्याद्रत्नसमन्विते । इति स्कान्दात् ॥ 6. पूर्वादिचतुर्दिक्षु तैजसानि ताम्ररौप्यकांस्यसौवर्णानि... पात्राणि... क्रमेण क्षीरादिभिश्चतुर्भिः पूर्णानि निधायाग्निहोत्रिणे विप्राय

दिताय दद्यात् । ६ । अत्र च गाथा भवन्ति । ७ ।

यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलंकृतम् ॥ ८ ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ ९ ॥
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥१०॥८७॥

---

अथ प्रसूयमाना गौः पृथिवी भवति । १ । तामलंकृतां ब्राह्मणाय दत्त्वा पृथिवीदानफलमाप्नोति । २ । अत्र गाथा भवति । ३ ।

सवत्सारोमतुल्यानि युगान्युभयतोमुखीम् ।
दत्त्वा स्वर्गमवाप्नोति श्रद्दधानः समाहितः ॥ ४ ॥८८॥

---

मासः कार्त्तिकोऽग्निदैवत्यः । १ । अग्निश्च सर्वदेवानां मुखम् । २ । तस्मात्तु कार्त्तिकं मासं बहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात्पापात्पूतो भवति । ३ ।

---

LXXXIX, 3. V[4] inserts जितेन्द्रियो after बहिःस्नायी; but this word must have crept in from 4.

---

वस्त्रयुग्मेनाच्छादितायोदकपूर्वं च पुच्छे दद्यात् ।... 9... चतुरुदधिवेलावलयिता पृथ्वी... LXXXVIII, 4. सवत्साया गोर्यावन्ति रोमाणि तत्समसंख्यानि युगानि...

कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन्हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते ॥ ४ ॥८९॥

---

मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरसा युक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रदापयेत् । १ । अनेन कर्मणा रूपसौभाग्यवानभिजायते । २ । पौषी चेत्पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्कोद्वर्तितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्वौषधिभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा गन्धपुष्पधूपदीपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः शाक्रैर्बार्हस्पत्यैश्च मन्त्रैः पावके हुत्वा ससुवर्णेन घृतेन ब्राह्मणान्स्वस्ति वाचयेत् । ३ । वासोयुगं कर्त्रे दद्यात् । ४ ।

---

4. दाता $C^{1,2}$. XC, 1. मृगशिरःसंयुक्तायां $C^{1,2}$v. 3. पावकं $V^{1-4}$ Ap.; अग्नौ N.

---

LXXXIX, 2. अग्निमुखा वै देवा इति ॥ 4 .. नित्यमविच्छेदेनारुणोदये स्नानशीलो बाह्येन्द्रियजयी गायत्रीं जपन्... XC, 1... पिष्टस्य लवणस्य प्रस्थं षोडशपलं सुवर्णः षोडशमाषो नाभौ मध्ये यस्य तं चन्द्रोदयकाले विप्राय विधिना दद्यात् ॥ 3... गोघृतेन कुम्भपरिमितेनाभिषिक्तः सर्वौषधैः... चकाराज्जलैश्च स्नातः... वैष्णवैरिदं विष्णुर्विचक्रम इत्यादिभिः । शाक्रैस्त्रातारमिन्द्रमित्यादिभिः । बार्हस्पत्यैर्बृहस्पते अति यदर्य इत्यादिभिश्चकारात्स्विष्टकृन्मन्त्रेण चाग्नौ हुत्वा ससुवर्णं घृतं त्रिभ्यो ब्राह्मणेभ्यो दद्यात्ते च स्वस्तीति प्रतिगृह्णीयुः ॥ 4. होमकर्त्रे...

अनेन कर्मणा पुष्यते । ५ । माघी मघायुता चेत्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति । ६ । फाल्गुनी फल्गुनीयुता चेत्स्यात्तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्यां मनोज्ञां रूपवतीं द्रविणवतीं चाप्नोति । ७ । नार्यपि भर्तारम् । ८ । चैत्री चित्रायुता चेत्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति । ९ । वैशाखी विशाखायुता चेत्तस्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः संतर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति । १० । ज्यैष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छत्रोपानहप्रदानेन गवाधिपत्यं प्राप्नोति । ११ । आषाढ्यामषाढायुक्तायामन्नपानदानेन तदेवाक्षय्यमाप्नोति । १२ । श्रावण्यां श्रवणयुक्तायां जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा स्वर्गमाप्नोति । १३ । प्रौष्ठपद्यां प्रौष्ठपद्युक्तायां गोदानेन सर्वपापविनिर्मुक्तो भवति । १४ । आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुतं विप्राय दत्त्वा

---

6. भवति पूतः । V[4]. 7. फाल्गुनी-स्यात् om. V[4]. 23 स—XCIV, 8. चर्म is wanting in v, two leaves having been lost. 11. चेत्तस्यां C[1,2].

---

8. नार्यपि चेदुक्तविधिना शय्यां ददाति तदोक्तगुणविशिष्टं भर्तारं प्राप्नोति ॥ 10. वैशाख्यां विशाखायोगे सप्त विप्रान्धर्मराजप्रीतये मधुमिश्रांस्तिलान्भोजयित्वा पापेभ्यो मुच्यते ॥ 11... गोमान्भवति ॥

दीप्ताग्निर्भवति । १५ । कार्त्तिकी कृत्तिकायुता चेत्स्यात्तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दत्त्वा कान्तारभयं न पश्यति । १६ । वैशाखशुक्लतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च सर्वपापेभ्यः पूतो भवति । १७ । यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति । १८ । पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा भुक्त्वा च पापेभ्यः पूतो भवति । १९ । माघ्यां समतीतायां कृष्णद्वादश्यां सोपवासः श्रवणं प्राप्य वासुदेवाग्रतो महावर्तिद्वयेन दीपद्वयं दद्यात् । २० । दक्षिणपार्श्वे महारजनरक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा । २१ । वामपार्श्वे तिलतैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा । २२ ।

---

16. ०भयं नश्यति $C^{1,2}$. 23. एतत्कृत्वा कृतकृत्यो यस्मिन्... स तत्रोज्ज्वलो $C^{1,2}$.

---

17... यवैर्भगवन्तं संपूज्य यवानेव वासुदेवद्वादशाक्षरेणाष्टोत्तरसहस्रं शतं वा हुत्वा ब्राह्मणाय च दत्त्वोक्तेभ्यः पापेभ्यो मुच्यते ॥ 18. यच्च सुवर्णरजतादि तद्दिने दद्यात्तदक्षय्यं भवति ।... 19... तिलैः स्नात्वा तिलैः पितॄन्संतर्पयित्वा... 20... देवाग्रे वक्ष्यमाणलक्षणवर्तिद्वयेन दीपद्वयं कृत्वा भगवते दद्यात् ॥ 21... सदशेन वाससा... अष्टोत्तरशतपलपरिमितघृताप्लावितेनैकं दीपयेत् ॥

एतत्कृत्वा यस्मिन्राष्ट्रेऽभिजायते यस्मिन्देशे यस्मिन्कुले तत्रोज्ज्वलो भवति । २३ । आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपभाग्भवति । २४ । तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान्भोजयित्वा राज्यभाग्भवति । २५ । प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृतयुतं रेवतीप्रीत्यै परमान्नं ब्राह्मणान्भोजयित्वा रेवतीं प्रीणयित्वा रूपस्य भागी भवति । २६ । माघे मासेऽग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवति । २७ । सर्वां चतुर्दशीं नदीजले स्नात्वा धर्मराजानं पूजयित्वा सर्वपापेभ्यः पूतो भवति । २८ ।

यदीच्छेद्विपुलान्भोगांश्चन्द्रसूर्यग्रहोपगान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ।२९।९०।

---

अथ कूपकर्तुस्तत्प्रवृत्ते पानीये दुष्कृतस्यार्धं विनश्यति । १ । तडागकृन्नित्यतृप्तो वारुणं लोकमश्नुते । २ ।

---

24. प्रदद्याद० $C^{1,2}$. 26. रूपभाग्भवति । $C^{1,2}$.

---

25... दधिदुग्धादिभिर्गव्यैर्विप्रत्रयं संभोज्य राज्यमाप्नोति ॥ 27. त्रीन्विप्रान्संभोज्य दीप्तौदर्याग्निर्भवति ॥ XCI, 2... नित्यं पिपासारहितो वरुणलोकं प्राप्नोति ॥

जलप्रदः सदा तृप्तो भवति । ३ । वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति । ४ । वृक्षप्रदो वृक्षप्रसूनैर्देवान्प्रीणयति । ५ । फलैश्चातिथीन् । ६ । छायया चाभ्यागतान् । ७ । देवे वर्षत्युदकेन पितॄन् । ८ । सेतुकृत्स्वर्गमाप्नोति । ९ । देवायतनकारी यस्य देवस्यायतनं करोति तस्यैव लोकमाप्नोति । १० । सुधासिक्तं कृत्वा यशसा विराजते । ११ । विचित्रं कृत्वा गन्धर्वलोकमाप्नोति । १२ । पुष्पप्रदानेन श्रीमान्भवति । १३ । अनुलेपनप्रदानेन कीर्तिमान्भवति । १४ । दीपप्रदानेन चक्षुष्मान्सर्वत्रोज्ज्वलश्च । १५ । अन्नप्रदानेन बलवान् । १६ । देवनिर्माल्यापनयनाद्गोदानफलमाप्नोति । १७ । देवगृहमार्जनात्तदुपलेपनाद्ब्राह्मणोच्छिष्टमार्जनात्पादशौचादकल्यपरिचरणाच्च । १८ ।

---

XCI, 10. यस्य देवायतनं C[1,2]. 16. C[1,2] add another Sûtra here, धूपप्रदानेनोर्ध्वं गच्छति । 18. देवायतन० C[1,2]. पादादिशौचादकल्यपरिचरणाच्च । C[1,2]; ०कल्यपरित्राणात् । V[4]. See the C.

---

3. तृषिताय जलदाता स्वर्गे युगशतं वितृष्णो भवेत् ।... 11. अन्यकृतमपि देवायतनं सुधयानुलिप्य यशस्वी भवति ॥ 12. यो देवायतनं नीलपीतादिभिश्चित्रयति सः... 18... तस्यैव गोमयादिनोपलेपनाद्विप्रोच्छिष्टपात्रं प्रक्षाल्य तत्स्थलानुलेपनात्तस्यैव पादधावनादस्वास्थ्ये शुश्रूषाकरणाच्च प्रत्येकं गोदानफलमाप्नोति ॥

कूपारामतडागेषु देवतायतनेषु च ।
पुनःसंस्कारकर्ता च लभते मौलिकं फलम् ॥१९॥९१॥

---

सर्वदानाधिकमभयप्रदानम् । १ । तत्प्रदानेनाभीप्सितं लोकमाप्नोति । २ । भूमिप्रदानेन च । ३ । गोचर्ममात्रामपि भुवं प्रदाय सर्वपापेभ्यः पूतो भवति । ४ । गोप्रदानेन स्वर्गलोकमाप्नोति । ५ । दशधेनुप्रदो गोलोकान् । ६ । शतधेनुप्रदो ब्रह्मलोकान् । ७ । सुवर्णशृङ्गीं रौप्यखुरीं मुक्तालाङ्गूलां कांस्योपदोहां वस्त्रोत्तरीयां दत्त्वा धेनुरोमसंख्यानि वर्षाणि स्वर्गलोकमाप्नोति । ८ । विशेषतः कपिलाम् । ९ । दान्तं धुरंधरं दत्त्वा दशधेनुप्रदो भवति । १० । अश्वदः सूर्यसालोक्यमाप्नोति । ११ । वासोदश्चन्द्रसालोक्यम् । १२ । सुवर्णदानेनाग्निसालोक्यम् । १३ । रूप्यदानेन रूपम् । १४ । तैजसानां पात्राणां प्रदानेन पात्रीभवति सर्वकामा-

---

XCII, 5. पात्रं भवेत् C[1,2].

---

19. कूपादीनामुपहतानां यथावत्करणं पुनःसंस्कारः । तत्कर्ता मौलिकमाद्यकर्तुरेव फलं लभते ।... XCII, 1. चौरव्याघ्रादिभ्यो भीतानामभयदानम्... 7... नानाविधान्ब्रह्मलोकानाप्नोति ।... 10... दशधेनुदानफलमाप्नोति ।... 10. सुवर्णरूप्यादिपात्रदानेन धनपुत्रादिकामानां पात्रं भवति ।...

नाम् । १५ । घृतमधुतैलप्रदानेनारोग्यम् । १६ । औषधप्रदानेन च । १७ । लवणप्रदानेन च लावण्यम् । १८ । धान्यप्रदानेन तृप्तिम् । १९ । सस्यप्रदानेन च । २० । अन्नदः सर्वम् । २१ । धान्यप्रदानेन सौभाग्यम् । २२ । तिलप्रदः प्रजामिष्टाम् । २३ । इन्धनप्रदानेन दीप्ताग्निर्भवति । २४ । संग्रामे च सर्वजयमाप्नोति । २५ । आसनप्रदानेन स्थानम् । २६ । शय्याप्रदानेन भार्याम् । २७ । उपानत्प्रदानेनाश्वतरीयुक्तं रथम् । २८ । छत्रप्रदानेन स्वर्गम् । २९ । तालवृन्तचामरप्रदानेनाध्वसुखित्वम् । ३० । वास्तुप्रदानेन नगराधिपत्यम् । ३१ ।
यद्यदिष्टतमं लोके यच्चास्ति दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षय्यमिच्छता ॥ ३२ ॥ ९२ ॥

---

16. om. $C^{1,2}$. After 22, $C^{1,2}$ insert the following clause, which is really a quotation occurring in the C., अकीर्तितानामन्येषां दानात्स्वर्गमवाप्नुयादिति । 25 om. $V^{1-3}$ $C^{1,2}$; but 26 is marked २६ in $V^{1\ 3}$.

---

17. औषधं रसक्काथादि ।... 19. धान्यं वार्षिकं श्यामाकादि ।... 20. सस्यानि हैमन्तिकवासन्तिकानि... 22. यान्यनुक्तानि धान्यानि कुलत्थकोद्रवमण्डूकादीनि ।... 26... राज्यस्थानमाप्नोति ॥ 27... पूर्वोक्तविधिना शय्यां दत्त्वोक्तलक्षणां भार्यां विन्देत ।... 30... ते दत्त्वा मार्गे सुखी भवति ।... 31. वास्तु गृहं तद्दत्त्वा नगरप्रभुत्वमाप्नोति ।... 32. यद्यस्य लोके प्रियं गृहे स्वस्य पुत्रदारादीनां वा यदभीष्टं तत्तदेवाक्षय्यमिदं मे ऽस्त्विति कामनया पात्रभूताय विप्राय देयम् ॥

अब्राह्मणे दत्तं तत्सममेव पारलौकिकम् । १ । द्विगुणं ब्राह्मणब्रुवे । २ । सहस्रगुणं प्राधीते । ३ । अनन्तं वेदपारगे । ४ । पुरोहितस्त्वात्मन एव पात्रम् । ५ । स्वसा दुहितृजामातरश्च । ६ ।

न वार्यपि प्रयच्छेत वैडालव्रतिके द्विजे ।
न बकव्रतिके विप्रे नावेदविदि धर्मवित् ॥ ७ ॥
धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधिकः ॥ ८ ॥
अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्या विनीतश्च बकव्रतपरो द्विजः ॥ ९ ॥
ये बकव्रतिनो लोके ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥ १० ॥
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम् ॥ ११ ॥

---

XCIII, 6. दुहिता जामातारश्च पात्रम् । $C^{1,2}$. 7. पापे all. See M. IV, 192. 9. नैष्कृतिकः $V^4$ ( T. and C. )

---

XCIII. 1... तस्मिन्यावद्दत्तं तावदेव परलोक उपतिष्ठते ।... 3. प्रकृष्टमधीतं यस्य यस्माद्वासौ प्राधीतः ।... 5. आत्मपुरोहित एव पात्रं न परपुरोहितः ।... 6. स्वस्रादयोऽपि स्वस्यैव पात्रं न परस्य... 8... हिंस्रो निर्दयः । सर्वद्रोग्धा सर्वाभिसंधिकश्च ।... 9... निकृतिः परपीडनं तद्यस्यासौ तत्परो नैकृतिकः । यथा कथंचित्परपीडनेन स्वार्थसाधने निरतः ।... 11. यः पापं कृत्वा तन्निमित्तं प्रायश्चित्तं धर्मापदेशेन धर्मव्याजेन करोति न प्रायश्चित्तव्यपदेशेन स तेन व्रतेन प्रायश्चित्तेन...

प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।
छद्मनाचरितं यच्च व्रतं रक्षांसि गच्छति ॥ १२ ॥
अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति ।
स लिङ्गिनां हरत्येनस्तिर्यग्योनौ प्रजायते ॥ १३ ॥
न दानं यशसे दद्यान्न भयान्नोपकारिणे ।
न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चितम् ॥ १४ ॥ ९३ ॥

---

गृही बलीपलितदर्शने वनाश्रयो भवेत् । १ । अपत्यस्य चापत्यदर्शने वा । २ । पुत्रेषु भार्यां निक्षिप्य तयानुगम्यमानो वा । ३ । तत्राप्यग्नीनुपचरेत् । ४ । अफालकृष्टेन पञ्च यज्ञान्न हापयेत् । ५ । स्वाध्यायं च न जह्यात् । ६ । ब्रह्मचर्यं पालयेत् । ७ । चर्मचीरवासाः स्यात् । ८ । जटाश्मश्रुलोमनखांश्च बिभृयात् । ९ । त्रिषवणस्नायी स्यात् । १० । कपोतवृत्तिर्मासनिचयः

---

12. गृह्यते C[1,2]. चच्च द्वै C[1,2]; See M. IV, 199. 13. ०वेशेन C[1,2]. See M. IV, 200. XCIV, 2. ०दर्शनेन. C[1,2] XCV om. v.

---

13. न विद्यन्ते शिखासूत्रादीनि त्रैवर्णिकलिङ्गानि यस्यासावलिङ्गी ।... वृत्तिं जीवनोपायमुपजीवति... 14. यशसे यशःकारिणे स्तावकाय । भयाद्भयकारिणे शत्रवे उपकारिणे मित्राय वृत्त्यर्थं नर्तनगानपरेभ्यश्च धर्मसाधनं न दद्यात्... XCIV, 9. जटाः शिरसि । श्मश्रु मुखे । लोमानि कक्षोपस्थयोः । नखान्हस्तपादयोः ।... बिभृयात् ।

संवत्सरनिचयो वा । ११ । संवत्सरनिचयः पूर्वनिचितमाश्वयुज्यां जह्यात् । १२ ।

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्वने वसन् ।
पुटेनैव पलाशेन पाणिना शकलेन वा ॥ १३ ॥ ९४ ॥

---

वानप्रस्थस्तपसा शरीरं शोषयेत् । १ । ग्रीष्मे पञ्चतपाः स्यात् । २ । आकाशशायी प्रावृषि । ३ । आर्द्रवासा हेमन्ते । ४ । नक्ताशी स्यात् । ५ । एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात् । ६ । पुष्पाशी । ७ । फलाशी । ८ । शाकाशी । ९ । पर्णाशी । १० । मूलाशी । ११ । यवान्नं पक्षान्तयोर्वा सकृदश्नीयात् । १२ । चान्द्रायणैर्वा वर्तेत । १३ । अश्मकुट्टः । १४ । दन्तोलूखलिको वा । १५ ।

तपोमूलमिदं सर्वं दैवमानुषकं जगत् ।
तपोमध्यं तपोऽन्तं च तपसा च तथा धृतम् ॥ १६ ॥

---

XCV, 16. देवमानुषजं $V^{1-4}$; दैवमानुजं $C^{1,2}$; दैविकस्य मानुषस्य वा जगतः N. See M. XI, 235. वृतम् ॥ $C^{1,2}$.

---

13...पुटं पर्णद्रोणः । पलाशमस्यूतमेव पर्णम् । पाणिः पाणितलम् । शकलं घटादिकपालं तेन वाश्नीयात् ॥ XCV, 5. दिवाहृतस्यापि नक्तमेव भोजनशीलः स्यात् ।... 6. एकं द्वे त्रीणि वा दिनान्यन्तरा त्यक्त्वा नक्तं भुञ्जीत ।... 17. यद्दुश्चरं दुर्ज्ञेयं...यत्संकल्पितमपि बहुतरान्तरायच्छन्नत्वात्प्राप्तुमशक्यं यच्चासमानदेशकालतया दूरं यच्च दुःकृतिसाध्यतया दुष्करं तत्सर्वमपि तपसा साध्यते यतस्तपःफलस्यातिक्रमानर्हं न भवति ।...

यद्दुश्चरं यद्दुरापं यद्दूरं यच्च दुष्करम् ।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७ ॥ ९५ ॥

---

अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात् । १ । आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् । २ । सप्तागारिकं भैक्षमादद्यात् । ३ । अलाभे न व्यथेत । ४ । न भिक्षुकं भिक्षेत । ५ । भुक्तवति जने अतीते पात्रसंपाते भैक्षमादद्यात् । ६ । मृन्मये दारुपात्रेऽलाबुपात्रे वा । ७ । तेषां च तस्याद्भिः शुद्धिः स्यात् । ८ । अभिपूजितलाभादुद्विजेत । ९ । शून्यागारनिकेतनः स्यात् । १० । वृक्षमूलनिकेतनो वा । ११ । न ग्रामे द्वितीयां रात्रिमावसेत् । १२ । कौपीनाच्छादनमात्रमेव वसनमादद्यात् । १३ । दृष्टिपूतं न्यसेत्पादम् । १४ । वस्त्रपूतं जलमादद्यात् । १५ । सत्यपूतं वदेत् । १६ । मनःपूतमाचरेत् । १७ । मरणं नाभिकामयेत जीवितं च

---

XCVI, 5. भिक्षेत् । V[1-4].

---

XCVI, 1...सर्वं वेदं सर्वं धनम्... 2. भिक्षार्थमेव ग्रामं प्रविशेन्नान्यथा ॥ 4. सप्तानामपि मध्ये यत्र गृहे भिक्षा न लभ्यते तत्र... 6... अवशिष्टादन्नाद्भैक्षं याचेत ।... 12. वर्षाभ्योऽन्यत्र ग्राम एकरात्रं वसेत् ।... 15. वस्त्रेण पावितं जलं न गृह्णीयात्... 17. वैकल्पिके सांशयिके वा शुद्ध्यादौ यत्र मनःप्रसादस्तदाचरेत् ॥ 18...चिरं जीवेय...इति ॥

। १८। अतिवादांस्तितिक्षेत । १९। न कं च नावमन्येत । २०। निराशीः स्यात् । २१। निर्नमस्कारः ।२२।

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं तयोरपि च चिन्तयेत् ।२३।

प्राणायामधारणाध्याननित्यः स्यात् । २४। संसारस्यानित्यतां पश्येत् । २५। शरीरस्याशुचिभावम् । २६। जरया रूपविपर्ययम् । २७। शारीरमानसागन्तुकव्याधिभिश्चोपतापम् । २८। सहजैश्च । २९। नित्यान्धकारे गर्भे वसतिम् । ३०। मूत्रपुरीषमध्ये च । ३१। शीतोष्णादुःखानुभवनम् । ३२। योनिसंकटनिर्गमनान्महदुःखानुभवनम् । ३३। बाल्ये मोहं गुरुपरवश्यताम् । ३४। अध्ययनादनेकक्लेशम् । ३५। यौवने च विषयाप्राप्तावमार्गे तदवाप्तौ विषयसेवनान्नरके पतनम् । ३६।

36. तदप्राप्तौ V[4].

21. नमस्कृतोऽप्याशिषं न प्रयुञ्जीत किंतु नारायणस्मरणं कुर्यात् । नमो नारायणायेति गृहस्थः प्रणमेद्यतिम् । ब्रूयुर्नारायणेत्येवं यतयो ह्यभिवादिता इति । भिक्षार्थमाशिषो न प्रयुञ्जीतेत्यन्ये । ...22. नमस्कृतो न नमस्कुर्यात्किंतु नारायणं स्मरेदित्युक्तम् । भिक्षार्थं प्रणतिं न कुर्यादित्यन्ये ॥ 27... विपर्ययो बलीपलिताद्यभिभवस्तं च पश्येदिति सर्वत्र संबन्धनीयम् ॥ 28. शारीरा व्याधयोऽर्शप्लीहादयः । मानसा मनोविक्षेपादयः । आगन्तुका वातपित्तोद्रेकादयः । ...32. तत्र गर्भाशये मातृभुक्तपीतशीतोष्णान्नपानादिजन्यं शीतोष्णानुभवदुःखं च ॥ 34... गुरूणां मातापित्रादीनाम् ।... 35. तत उपनीतस्य वेदाध्ययने गुरुशुश्रूषाध्ययनावधानाद्यनेकक्लेशम् ॥ 36. तारुण्ये पुनः स्रक्चन्दनवनितादिप्राप्तावनेकविषयाप्राप्तावनेकक्लेशम् । तेषामेव विषयाणां निषेधातिक्रमेण प्राप्तानां सेवने नरकपातं च ।...

अप्रियैस्सतिं प्रियैश्च विप्रयोगम् । ३७ । नरके च सुमहद्दुःखम् । ३८ । संसारसंसृतौ तिर्यग्योनिषु च । ३९ । एवमस्मिन्सततयायिनि संसारे न किञ्चित्सुखम् । ४० । यदपि किञ्चिद्दुःखापेक्षया सुखसंज्ञं तदप्यनित्यम् । ४१ । तत्सेवाशक्तावलाभेन वा महद्दुःखम् । ४२ । शरीरं चेदं सप्तधातुकं पश्येत् । ४३ । वसारुधिरमांसमेदोऽस्थिमज्जाशुक्रात्मकम् । ४४ । चर्मावनद्धम् । ४५ । दुर्गन्धि च । ४६ । मलायतनम् । ४७ । सुखशतैरपि वृतं विकारि । ४८ । प्रयत्नाद्धृतमपि विनाशि । ४९ । कामक्रोधलोभमोहमदमात्सर्यस्थानम् । ५० । पृथिव्यप्तेजोवाय्वाकाशात्मकम् । ५१ । अस्थिशिराधमनिस्नायुयुतम् । ५२ । रजस्वलम् । ५३ । षट्त्वचम् । ५४ । अस्थ्नां त्रिभिः शतैः षष्ठ्यधिकैर्धार्यमाणम् । ५५ । तेषां विभागः । ५६ । सूक्ष्मैः सह चतुःषष्टिर्दशनाः । ५७ । विंशतिर्नखाः

---

40. सुखम् om. C[1,2]. 48. वृत्तं C[1,2]. 54. षट् त्वक्पेशि C[1,2]; om. v.

---

37... प्रियैः पुत्रकलत्रादिभिश्च वियोगः ॥ 41... यत्किंचिद्दुःखाभावापेक्षया सुखत्वेन व्यवह्रियते... 42. तेषां वैषयिकसुखानां रोगादिना विषयसेवाशक्तौ शक्तावपि दारिद्र्येण विषयालाभे वा महदेव दुःखम् ॥ 48. पानभोजनादिजन्यैः सुखशतैर्युक्तमपि पानभोजनादिभिरेव विकारि। तत्तद्गुरुलघुभावेन श्लेष्माजीर्णादिदुःखशताकुलमित्यर्थः ॥ 49. रसायनादिप्रयत्नैश्चिरधृतमपि... 57. सूक्ष्माणि दन्तमूलभूतान्यस्थीनि स्थालाख्यानि द्वात्रिंशत्तावन्त एव तदुत्पन्ना दन्तास्तैः सह...

। ५८ । पाणिपादशलाकाश्च । ५९ । षष्टिरङ्गुलीनां पर्वाणि । ६० । द्वे पार्ष्ण्योः । ६१ । चतुष्टयं गुल्फेषु । ६२ । चत्वार्यरत्न्योः । ६३ । चत्वारि जङ्घयोः । ६४ । द्वे द्वे जानुकपोलयोः । ६५ । ऊर्वंसयोः । ६६ । अक्षतालूषकश्रोणिफलकेषु । ६७ । भगास्थ्येकम् । ६८ । पृष्ठास्थि पञ्चचत्वारिंशद्भागम् । ६९ । पञ्चदशास्थीनि ग्रीवा । ७० । जत्र्वेकम् । ७१ । तथा हनुः । ७२ । तन्मूले च द्वे । ७३ । द्वे ललाटाक्षिगण्डे । ७४ । नासा घनास्थिका । ७५ । अर्बुदैः स्थालकैश्च सार्धं द्वासप्ततिः पार्श्वकाः । ७६ । उरः सप्तदश । ७७ । द्वौ शङ्खकौ । ७८ । चत्वारि कपालानि शिरसश्चेति । ७९ । शरीरेऽस्मिन्सप्त शिराशतानि । ८० । नव स्नायुशतानि । ८१ । धमनीशते द्वे । ८२ । पञ्च पेशीशतानि । ८३ । क्षुद्र-

66. द्वे द्वे । $C^{1,2}$ ; om. v. 71. जान्वेकं । $C^{1,2}$. 76. स्थानकैश्च $C^{1,2}$v.

59. करपादयोः पृष्ठे शलाकाकाराण्यङ्गुलिमूलभूतानि विंशतिरेवास्थीनि ॥ 60. प्रत्येकं विंशत्यङ्गुलीनां त्रीणि त्रीणि पर्वाणीत्येवं षष्टिः पर्वास्थीनि ॥ 67. अक्षः कर्णनेत्रयोर्मध्यभवः शङ्खाधोभागः ।... 75. नासा नासिका सा च घनसंज्ञैकास्थिमती ॥ 76. पार्श्वका वङ्क्रयः ।... तासां वक्षसि संध्यस्थीन्यर्बुदान्युभयतो दश दशेति विंशतिः ।...तासामेव पृष्ठतः संध्यस्थीनि स्थालका उभयतस्त्रयोदश त्रयोदशेति षड्विंशतिः ।... 80...शिराणां वातपित्तादिवाहिनीनाम्... 82. धमन्यः प्राणवाहिन्यो नाड्यस्तासां द्वे शते ॥ 83. बाह्याभ्यन्तराणां मांसपेशीनां पञ्च शतानि ॥

धमनीनामेकोनत्रिंशल्लक्षाणि नव शतानि षट्पञ्चाशच्च धमन्यः । ८४ । लक्षत्रयं श्मश्रुकेशकूपानाम् । ८५ । सप्तोत्तरं मर्मशतम् । ८६ । संधिशते द्वे । ८७ । चतुःपञ्चाशद्रोमकोट्यः सप्तषष्टिश्च लक्षाणि । ८८ । नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ मूर्धा कण्ठो हृदयं चेति प्राणायतनानि । ८९ । बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षडङ्गानि । ९० । वसा वपा अवहननं नाभिः क्लोमा यकृत्प्लीहा क्षुद्रान्त्रं वृक्ककौ बस्तिः पुरीषाधानमामाशयो हृदयं स्थूलान्त्रं गुदमुदरं गुदकोष्ठम् । ९१ । कनीनिके अक्षिकूटे शष्कुली कर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ

---

91. क्लोम $V^{1-4}v$ ; क्लोमो $C^{1,2}v$ ; क्लोमा N. यकृत् om. $V^4$. वृक्कौ $C^{1,2}$.

---

84. स्थूलधमनीनां शाखाः क्षुद्रधमन्यस्तासामपि प्रशाखा धमन्यः ।... 85. मुखस्थानि रोमाणि श्मश्रूणि । शिरोजाः केशाः । कूपा रोमकूपाः स्वेदस्रवणे सुषिराणि ।... 86. मर्माणि मृत्युक्लेशहेतुस्थानानि ।... 88...रोम्णां सूक्ष्मतरा भागाः ।... 89...तत्स्वरूपमुक्तं स्मृत्यन्तरे । हृदि तिष्ठति यच्छुद्धमीषद्रक्तं सपीतकम् । ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छतीति । शेषं प्रसिद्धम् ।... 91. आन्तराण्याह ।... क्लोमा मांसपिण्डो यकृत्कालखण्डस्तौ च दक्षिणकुक्षिस्थौ । प्लीहा मांसपिण्डोऽवहननं च सव्यकुक्षिस्थौ ।... वृक्ककौ हृदयसमीपस्थौ मांसपिण्डौ ।... पुरीषाधानं मलाशयः ।... स्थूलान्त्रं दीर्घान्त्रम् ।... गुदकोष्ठं बाह्याद्गुदवलयादन्तर्गुदवलये द्वे । एकत्वं जात्यभिप्रायेण । एष आन्तरो विस्तारः । अङ्गान्तराण्याह ॥

शङ्खकौ दन्तवेष्टावोष्ठौ ककुन्दरे वंक्षणौ वृषणौ वृक्कौ श्लेष्मसंघातकौ स्तनौ उपजिह्वा स्फिजौ बाहू जङ्घे ऊरूपिण्डिके तालूदरं बस्तिशीर्षौ चिबुकं गलशुण्डिके अवटुश्चेत्यस्मिन्शरीरे स्थानानि । ९२ । शब्दस्पर्शरूपरसगन्धाश्च विषयाः । ९३ । नासिकालोचनत्वग्जिह्वाश्रोत्रमिति बुद्धीन्द्रियाणि । ९४ । हस्तौ पादौ पायूपस्थं जिह्वेति कर्मेन्द्रियाणि । ९५ । मनो बुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः । ९६ ।

इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ ९७ ॥
क्षेत्रज्ञमपि मां विद्धि सर्वक्षेत्रेषु भाविनि ।
क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा ॥ ९८ ॥ ९६ ॥

---

92. अवट० $C^{1,2}$ ; अवद्ध v. शरीरके $V^{1-3}$ $C^{1,2}$v. 98. क्षेत्रं क्षेत्रज्ञ० $V^{2}$ $C^{1,2}$v. See Bhag. Gîtâ XIII, 2 ( क्षेत्रक्षेत्रज्ञयोर्ज्ञानम् ).

---

92... अक्षिकूटे पक्ष्मर्णा । नेत्रनासासंधी इत्यन्ये । शष्कुली कर्णशष्कुली ।... वृक्कौ पूर्वोक्तावेव श्लेष्मसंघातप्रवृद्धौ । स्तनाविति स्त्रीणामुच्यते । इदमित्थमेव व्याख्येयमन्यथा बाह्याङ्गाभिधानप्रस्ताव अन्तरंगयोर्वृक्कयोः पुनरभिधानमसंगतं स्यात् ।... ऊरू जानूपरिभागौ । पिण्डिके जङ्घोर्वोर्मांसलौ भागौ ।... बस्तिशीर्षौ बस्तेर्मूत्राशयस्य शीर्षावुपरि स्थितौ नलौ ।... अवटुर्घाटा ।... अस्मिन्शरीरे प्राणस्थानानि ।... 96... इन्द्रियागोचरत्वाच्छ्रुत्यनुमानादिगम्याः । 97... तद्यो ग्रहीतुं त्यक्तुं च जानाति तमात्मानमात्मविदो योगिनः क्षेत्रज्ञमित्याहुः ।... 98... सर्वेषु जरायुजाण्डजस्वेदजोद्भिज्जेषु क्षेत्रेषु मामेव क्षेत्रज्ञं जानीहि ।...

ऊरुस्थोत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन्स्वं नासिकाग्रं पश्यन्दिशश्चानवलोकयन्विभीः प्रशान्तात्मा चतुर्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत् । १ । नित्यमतीन्द्रियमगुणं शब्दस्पर्शरूपरसगन्धातीतं सर्वज्ञमतिस्थूलम् । २ । सर्वगमतिसूक्ष्मम् । ३ । सर्वतःपाणिपादं सर्वतोऽक्षिशिरोमुखं सर्वतःसर्वेन्द्रियशक्तिम् । ४ । एवं ध्यायेत् । ५ । ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति । ६ । अथ निराकारे लक्षबन्धं कर्तुं न शक्नोति तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्वं पूर्वं ध्यात्वा तत्र लब्धलक्षस्तत्तत्परित्यज्यापरमपरं ध्यायेत् । ७ । एवं पुरुषध्यानमारभेत । ८ । अत्राप्यसमर्थः स्वहृदयपद्म-

---

XCII, 7. तत्रलक्षस्तत्तत्परित्यज्य V[1–3]; तत्रलक्षस्ततत्परित्यज्य C[1,2]; लब्धलक्षस्थं परित्यजेत् V; लब्धलक्षस्ततत्परित्यज्य Ap.

---

XCVII, 1... तथोत्ताने सव्ये करे दक्षिणकरमुत्तानं न्यस्य... । पूर्वापरादिदिशश्च... अनवलोकयन् ।... 2. एतानि विशेषणानि पुरुषस्य व्यतिरेकिहेतुतया तत्त्वभेदप्रतिपादकानि ।... 3. सर्वगं व्यापकमतिसूक्ष्मं निराकारम् ।... 4. सर्वतः सर्वस्मिन्नपि प्रदेशे पाणिपादाक्षिशिरोमुखैर्व्याप्तं तथा सर्वतः सर्वेष्वपि शब्दादिषु विषयेषु सर्वेषां चक्षुरादीन्द्रियाणां शक्तिर्ग्रहणसामर्थ्यं यस्य तादृशमयमर्थः ।... 7. यदा निराकारे ब्रह्मणि लक्षग्राह्ये बन्धमन्तःकरणस्थैर्यं कर्तुं न शक्नोति तदा पृथिव्यादिपुरुषान्तानां दशानां मध्ये पूर्वस्मिन्पूर्वस्मिन्ध्यानपरिपाकेनान्तःकरणस्थैर्यविषयतामानीते तत्तत्परिहारेणापरमपरं अन्तःकरणस्थैर्यविषयतामानयेत् ।... बुद्धिर्विज्ञानात्मकं महत्तत्त्वम् । आत्माहंकारः । अव्यक्तं प्रधानम् ।...

स्यावाङ्मुखस्य मध्ये दीपवत्पुरुषं ध्यायेत् । ९ । तत्राप्यसमर्थो भगवन्तं वासुदेवं किरीटिनं कुण्डलिनमङ्गदिनं श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणमध्यगतभुवं ध्यायेत् । १० । यद्ध्यायति तदाप्नोति ध्यानगुह्यम् । ११ । तस्मात्सर्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत् । १२ । न च पुरुषं विना किञ्चिदप्यक्षरमस्ति । १३ । तं प्राप्य मुक्तो भवति । १४ ।

पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः ।
तस्मात्पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः ॥ १५ ॥
प्राग्रात्रापररात्रेषु योगी नित्यमतन्द्रितः ।
ध्यायेत पुरुषं विष्णुं निर्गुणं पञ्चविंशकम् ॥ १६ ॥
तत्त्वात्मानमगम्यं च सर्वतत्त्वविवर्जितम् ।

---

17. अशक्तं $V^{1-4}$v N.; असक्तं $C^{1,2}$. See the C.

---

8. तत्र पृथिव्यादिध्यानक्रमेणात्मध्यानेऽप्यसमर्थः... 10. तत्र क्षेत्रज्ञध्यानेऽप्यसमर्थो भगवन्तं... स्मितललितवदनताविभावितसौम्यरूपम्... चरणकमलयुगलाराधनतत्परवसुन्धरं श्रीधरं ध्यायेत् ॥ 11...त्यक्तदेहस्य तत्सायुज्यमेव भवतीति ध्यानानां निगूढं तत्त्वम् ।... 14. तं...पुरुषं प्राप्य ध्यानयोगेनाभिन्नत्वेन प्रतिपद्य... 15. सकलं स्थावरजङ्गमात्मकं पुरं भूतग्राममन्तर्यामित्वेनाक्रम्याभिव्याप्य महाप्रभुः परमात्मा यस्माच्छेतेऽधितिष्ठति तस्मादात्मतत्त्वचिन्तकैरध्यात्मविद्भिरसौ पुरुष इत्युच्यते ॥ 17...अगम्यं चक्षुरादिप्रमाणागम्यम् । सर्वैः पूर्वोक्तैः प्रकृत्यादितत्त्वैर्विवर्जितं प्रकृतिविकृति-

असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १७ ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १८ ॥
अविभक्तं च भूतेन विभक्तमिव च स्थितम् ।
भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च ॥ १९ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥ २० ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ २१ ॥ ९७ ॥

---

भावेन ।... असक्तमिति पाठे प्रकृत्यादावासक्तिरहितम् । सर्वं भूतादिग्रामं बिभर्तीति सर्वभृत् ।... निर्गुणं गुणैः सत्त्वादिभिः शून्यं गुणानां सत्त्वादिकार्याणां ज्ञानसुखादीनां भोक्तृ साक्षिभूतम् ।... 18. भूतानां प्राणिनां बहिर्भोग्यरूपेणान्तर्भोक्तृरूपेण च स्थितम् । अचरं वृक्षशैलादिरूपम् । चरं जलपवनादिरूपम् । सूक्ष्मत्वादप्रकारत्वाजिज्ञासाया अप्यगोचरम् । दूरथं बुद्ध्याद्यविषयम् ।... अन्तिके हृत्पद्ममध्ये स्थितम् ।... 19. भूतग्रामेणाविभक्तमात्यन्तिकभेदरहितं कार्याणां प्रतिभासिकभेदेन च भिन्नमिवावभासमानम् । भूतमतीतकालं भव्यं भविष्यत्कालं भवद्वर्तमानकालं तेषां समाहारो भूतभव्यभवत्तद्रूपं जगतो ग्रसिष्णु संहारकं प्रभविष्णूत्पादकं चेति विज्ञेयम् ॥ 20. ज्योतिषां चन्द्रसूर्यादीनां परप्रकाशकानामपि ज्योतिः प्रकाशकम् ।... अत एव तमसोऽज्ञानात्परं तन्निवृत्तौ प्रकाशमानम् ।... ज्ञानं ज्ञानरूपं चिद्रूपत्वात् । तदेव च घटपटाद्याकारेण ज्ञेयम् । ज्ञानगम्यं ज्ञायते तेनेति ज्ञानं योगस्तेन गम्यत इति ।...धिष्ठितं व्यवस्थितम्... छान्दसोऽलोपात् ।... 21...ज्ञानं ज्ञायते तेनेति व्युत्पत्त्या ज्ञानसाधनं योगः । ज्ञेयं...ब्रह्म ध्येयम् । एतच्च सर्वं मदुक्तं विशेषेण ज्ञात्वा मद्भक्तो मद्भावायोपपद्यते योग्यो भवतीति ॥

इत्येवमुक्ता वसुमती जानुभ्यां शिरसा च नमस्कारं कृत्वोवाच । १ । भगवंस्त्वत्समीपे सततमेवं चत्वारि महाभूतानि कृतालयान्याकाशः शङ्खरूपी वायुश्चक्ररूपी तेजश्च गदारूप्यम्भोऽम्भोरुहरूपि अहमप्यनेनैव रूपेण भगवत्पादमध्ये परिवर्तिनी भवितुमिच्छामि । २ । इत्येवमुक्तो भगवांस्तथेत्युवाच । ३ । वसुधापि लब्धकामा तथा चक्रे । ४ । देवदेवं च तुष्टाव । ५ । ओं नमस्ते । ६ । देवदेव । ७ । वासुदेव । ८ । आदिदेव । ९ । कामदेव । १० । कामपाल । ११ । महीपाल । १२ । अनादिमध्यनिधन । १३ । प्रजापते । १४ । सुप्रजापते । १५ । महाप्रजापते । १६ । ऊर्जस्पते

---

XCVIII, 1. The older part of v ends with त्वत्. Two leaves are added at the end, in large modern characters; they contain a mere repetition of the last page of the old MS. up to the end of XCVII. II om. C[1,2].

---

XCVIII, 2. पञ्चानामपि महाभूतानां भगवदेकाधारतायामविशेषादाकाशादीनां चतुर्णां शङ्खादिचतुष्टयरूपेण भगवत्यवस्थानसिद्धौ ममैव किमिति वैलक्षण्यमिति तत्परिहाराय मयापि त्वय्येवावस्थेयमिति प्रार्थना ॥ 4...पूर्णकामा पृथिव्यपि तथैवान्वतिष्ठत् ॥ 9. देवानामादिरुत्पत्तिस्थानम्... 10. कामैरभिलाषैः सृष्टिस्थितिसंहारकैर्दीव्यतीति कामदेवः । धर्मादिचतुष्टयं वाञ्छद्भिः काम्यत इति कामः स चासौ देवश्चेति वा ॥ 14. प्रजानां देवासुरमनुष्यादीनां पतिरन्तर्यामी ॥

। १७। वाचस्पते । १८। जगत्पते । १९। दिवस्पते । २०। वनस्पते । २१। पयस्पते । २२। पृथिवीपते । २३। सलिलपते । २४। दिवपते । २५। महत्पते । २६। मरुत्पते । २७। लक्ष्मीपते । २८। ब्रह्मरूप । २९। ब्राह्मणप्रिय । ३०। सर्वग । ३१। अचिन्त्य । ३२। ज्ञानगम्य । ३३। पुरुहूत । ३४। पुरुष्टुत । ३५। ब्रह्मण्य । ३६। ब्रह्मप्रिय । ३७। ब्रह्मकायिक । ३८। महाकायिक । ३९। महाराजिक । ४०। चतुर्महाराजिक । ४१। भास्वर । ४२। महाभास्वर । ४३। सप्त । ४४। महाभाग । ४५। स्वर । ४६। तुषित । ४७। महातुषित । ४८। प्रतर्दन । ४९। परिनिर्मित । ५०। अपरिनिर्मित । ५१। वशवर्तिन् । ५२।

---

19. जगतां... चलनादिक्रियाहेतुः ॥ 21... पतिः प्ररोहकः ॥ 22. पयसो बालादिजीवनहेतोः स्तन्यस्य पतिः प्रवर्तकः ॥ 23. पृथिव्याः पतिः बीजप्ररोहणशक्तिः ॥ 25. दिशां दिग्भागानां पतिः प्रागादिव्यवहारहेतुः ॥ 26. महतो महत्तत्त्वस्य... 28. लक्ष्म्याः पतिः प्रदाता ॥ 29. ब्रह्म निर्वचनीयं रूपं यस्य ॥ 30. ब्राह्मणा वेदविदः प्रिया दयिता यस्य।... ब्राह्मणानां वा प्रियः ॥ 34. पुरुभिर्बहुभिर्यज्ञैर्हूत आहूतः ॥ 35. पुरुभिर्बहुभिर्वेदैः स्तुतः ॥ 37. वेदानां प्रियः। वेदाः प्रिया यस्येति वा ॥ 39. अपरिच्छिन्नमूर्तिः ॥ 44... सप्तभक्तिकं साम...यद्वा सप्त लोका ऊर्ध्वमधश्च यस्येत्यर्शादित्वादच् ॥ 47... तुषितो भक्तसमर्पितैः कर्मभिः ॥ 48. कर्मव्यतिरेकेणापि नित्यतुष्टः ॥ 49. प्रलये सर्वलोकान्प्रकर्षेण तर्दति तृणत्तीति वा ॥ 50. परितः प्रपञ्चाकारेण निर्मितः ॥ 51. अकृत्रिमः ॥ 52. भक्तानां वशे वर्तितुं शीलमस्य ॥

यज्ञ । ५३ । महायज्ञ । ५४ । यज्ञयोग । ५५ । यज्ञ-गम्य । ५६ । यज्ञनिधन । ५७ । अजित । ५८ । वैकुण्ठ । ५९ । अपार । ६० । पर ॥ ६१ । पुराण । ६२ । लेख्य । ६३ । प्रजाधर । ६४ । चित्रशिखण्डधर । ६५ । यज्ञ-भागहर । ६६ । पुरोडाशहर । ६७ । विश्वेश्वर । ६८ । विश्वधर । ६९ । शुचिश्रवः । ७० । अच्युतार्चन । ७१ । घृतार्चिः । ७२ । खण्डपरशो । ७३ । पद्मनाभ । ७४ । पद्मधर । ७५ । पद्मधाराधर । ७६ । हृषीकेश । ७७ । एकशृङ्ग । ७८ । महावराह । ७९ । द्रुहिण । ८० । अच्युत । ८१ । अनन्त । ८२ । पुरुष । ८३ । महापु-रुष । ८४ । कपिल । ८५ । सांख्याचार्य । ८६ । विष्व-क्सेन । ८७ । धर्म । ८८ । धर्मद । ८९ । धर्माङ्ग । ९० । धर्मवसुप्रद । ९१ । वरप्रद । ९२ । विष्णो । ९३ । जिष्णो । ९४ । सहिष्णो । ९५ । कृष्ण । ९६ । पुण्ड-

68. विश्वक् C[1,2].

53. यज्ञो वै विष्णुरिति श्रुतेः ।... 54. महान्यज्ञो यस्य देवा यज्ञ-मतन्वतेत्यादि श्रुतिप्रसिद्धम् ॥ 57. यज्ञानां निधनं समाप्तिर्यस्मिन्सम-र्पणेन ।... 61. मनोबुद्धीन्द्रियातीतः... 63. लेखेभ्यो देवेभ्यो हितः... 70. शुची श्रुत्याकर्णनशीले श्रवसी यस्येति । शुचीनि श्रवांसि नामानि यस्येति वा ॥ 72. घृतेनार्चिस्तेजो यस्य ॥ 75. पद्मं करे धरतीति । 80. द्रुहत्यसुरेभ्यो धार्मिकेभ्यो ऽधार्मिकेभ्यो वेति द्रुहिणः ॥ 84. महानपरि-च्छिन्नः पुरुषः ॥ 85. कपिलो वर्णतो नामतश्च महामुनिः ।...

रीकाक्ष । ९७ । नारायण । ९८ । परायण । ९९ ।
जगत्परायण । १०० । नमो नम इति । १०१ ।
स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा ।
उवाच संमुखं देवीं लब्धकामा वसुंधरा ॥ १०२ ॥ ९८ ॥

---

दृष्ट्वा श्रियं देवदेवस्य विष्णो-
र्गृहीतपादां तपसा ज्वलन्तीम् ।
सुतप्तजाम्बूनदचारुवर्णां
पप्रच्छ देवीं वसुधा प्रहृष्टा ॥ १ ॥
उन्निद्रकोकनदचारुकरे वरेण्ये
उन्निद्रकोकनदनाभिगृहीतपादे ।
उन्निद्रकोकनदसद्मसदास्थितीते
उन्निद्रकोकनदमध्यसमानवर्णे ॥ २ ॥
नीलाब्जनेत्रे तपनीयवर्णे
शुक्लाम्बरे रत्नविभूषिताङ्गि ।

102. देवं C[1,2]. XCIX, 2. ०नाभि all.

102... एवं षण्णवत्यध्यायोपदेष्टारं महागुरुं भगवन्तं षण्णवत्यैव नामभिः स्तुत्वा भगवतीं लक्ष्मीं संमुखं यथा भवति तथा वक्ष्यमाणमुवाच ॥ XCIX, 1. द्रवीकृतसुवर्णवर्णाम्... 2... उन्निद्रं... रक्तोत्पलं तेन तद्वच्चारु करतलं यस्याः । (the next clause corrupted) तादृश एव तस्मिन्नेव सद्मनि सदा नित्यं स्थितिमिते प्राप्ते ।...

चन्द्रानने सूर्यसमानभासे
महाप्रभावे जगतः प्रधाने ॥ ३ ॥
त्वमेव निद्रा जगतः प्रधाना
लक्ष्मीर्धृतिः श्रीर्विरतिर्जया च ।
कान्तिः प्रभा कीर्तिरथो विभूतिः
सरस्वती वागथ पावनी च ॥ ४ ॥
स्वधा तितिक्षा वसुधा प्रतिष्ठा
स्थितिः सुदीक्षा च तथा सुनीतिः ।
ख्यातिर्विशाला च तथानसूया
स्वाहा च मेधा च तथैव बुद्धिः ॥ ५ ॥
आक्रम्य सर्वां तु यथा त्रिलोकीं
तिष्ठत्ययं देववरोऽसिताक्षि ।

---

6. ऽसिताङ्गि C[1,2].

---

3. .. जगतो विश्वस्य प्रधाना प्रथमोद्देश्या प्रसवित्री प्रकृतिर्वेति ॥ 4. जगतः चतुर्ष्वपि पुरुषार्थेषु प्रधाना मुख्योद्देश्या...मुक्तिः सुषुप्तिर्वा ।...विरतिर्मुमुक्षया विषयसुखेषु वैराग्यम् ।... कान्तिः स्त्रीपुरुषादिशरीरेषु सुन्दरता । प्रभा सूर्यचन्द्रमसोर्दीप्तिः ।...विभूतिर्धनधान्यादिसमृद्धिः । सरस्वती विदुषामर्थकल्पनाशक्तिः ।... पावनी प्रायश्चित्तादेः पापनाशनशक्तिस्त्वमेव ॥ 5. स्वधा पितृतृप्तिः ।... वसुधा धनधारणशक्तिः ।... स्थितिः स्थानशक्तिः । सुदीक्षा यज्ञाधिकारसिद्धिः । सुनीतिः सामाद्युपायसिद्धिः । ख्यातिर्विशाला सार्वजनिनी प्रसिद्धिः ।... स्वाहा देवतृप्तिः ।... 6. यथा त्रैलोक्यव्यापको भगवांस्तथा तच्छक्तेस्तवापि त्रैलोक्यव्यापकत्वं सिद्धमेव शक्तिशक्तिमतोर-

तथा स्थिता त्वं वरदे तथापि
पृच्छाम्यहं ते वसतिं विभूत्याः ॥ ६ ॥
इत्येवमुक्ता वसुधां बभाषे
लक्ष्मीस्तदा देववराग्रतस्था ।
सदा स्थिताहं मधुसूदनस्य
देवस्य पार्श्वे तपनीयवर्णे ॥ ७ ॥
अस्याज्ञया यं मनसा स्मरामि
श्रिया युतं तं प्रवदन्ति सन्तः ।
संस्मारणे चाप्यथ यत्र चाहं
स्थिता सदा तच्छृणु लोकधात्रि ॥ ८ ॥
वसाम्यथार्के च निशाकरे च
तारागणाढ्ये गगने विमेघे ।
मेघे तथालम्बपयोधरे च
शक्रायुधाढ्ये च तडित्प्रकाशे ॥ ९ ॥

---

7. उक्ता $V^4$ N. ; उक्तां $C^{1,2}$.

---

विनाभावादभेदाद्वेति यद्यपि तथापि तव विभूतेर्वसतिं निवासस्थानमहं पृच्छामि ॥ 8. एवं संभावयेत्यस्य भगवतो निदेशेन यमेवाहं मनसा स्मरामि तमेव सन्तः श्रीमन्तं प्रवदन्ति ।... संस्मारणहेतोर्भगवन्निदेशे च सति यत्राहं तिष्ठामि तदपि हे लोकधात्रि श्रृणुष्व ॥ 9. वासस्थाना-न्याह ।... निर्मेघे गगने । अलम्बं पतनोन्मुखं पयः पानीयं धरतीति तादृशे शक्रधनुर्भूषिते स्फुरद्विद्युति मेघे चाहं वसामि । चकारास्तथाशब्दश्च प्रत्येकं वासस्थानताभिधानाय ॥

तथा सुवर्णे विमले च रूप्ये
रत्नेषु वस्त्रेष्वमलेषु भूमे ।
प्रासादमालासु च पाण्डुरासु
देवालयेषु ध्वजभूषितेषु ॥ १० ॥
सद्यः कृते चाप्यथ गोमये च
मत्ते गजेन्द्रे तुरगे प्रहृष्टे ।
वृषे तथा दर्पसमन्विते च
विप्रे तथैवाध्ययनप्रपन्ने ॥ ११ ॥
सिंहासने चामलके च बिल्वे
छत्रे च शङ्खे च तथैव पद्मे ।
दीप्ते हुताशे विमले च खड्गे
आदर्शबिम्बे च तथा स्थिताहम् ॥ १२ ॥
पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषितेषु ।

---

10. पयोदमालासु V[4]. 11. T. and C. om. V[4].

---

10. हे भूमे निर्मलयोः सुवर्णरजतयोरमलयोर्वस्त्ररत्नयोश्च सुधाधवलितासु प्रासादपरंपरासु ध्वजभूषितेषु देवालयेषु चाहं तिष्ठामि ॥ 12... आमलके धात्रीवृक्षे ।... शङ्खे वाद्ये ।... निर्धौतमले खड्गे तादृश आदर्शे चाहं तिष्ठामि ॥ 13... चामरं बालव्यजनं तालवृन्तं व्यजनं ताभ्यां सहितेषु विभूषितेषु विचित्रेषु प्रदेशेषु । साहित्यं चात्र वासाभिप्रायेण न वैशिष्ट्याभिप्रायेण शकुनाध्याये केवलयोरेव प्राशस्त्यश्रवणात् । ( See

भृङ्गारपात्रेषु मनोहरेषु
मृदि स्थिताहं च नवोद्धृतायाम् ॥ १३ ॥
क्षीरे तथा सर्पिषि शाद्वले च
क्षौद्रे तथा दध्नि पुरंध्रिगात्रे ।
देहे कुमार्याश्च तथा सुराणां
तपस्विनां यज्ञहुतां च देहे ॥ १४ ॥
शरे च संग्रामविनिर्गते च
स्थितौ मृते स्वर्गसदःप्रयाते ।
वेदध्वनौ चाप्यथ शङ्खशब्दे
स्वाहास्वधायामथ वाद्यशब्दे ॥ १५ ॥
राजाभिषेके च तथा विवाहे
यज्ञे वरे स्नातशिरस्यथापि ।
पुष्पेषु शुक्लेषु च पर्वतेषु
फलेषु रम्येषु सरिद्वरासु ॥ १६ ॥

---

14. यज्ञभृताञ्च $C^{1,2}$. 15 स्थितामृते $V^{1-4}$ $C^{1,2}$. See the C.

---

LXIII, 30.) भृङ्गारः कनकालुका पात्राणि स्थालादीनि तेषु मनोहरेषु... 14. दधिर्क्षीरसर्पिःक्षौद्रेषु ।... शाद्वले हरिते तृणे ।... सुराः देवप्रतिमाः । यज्ञे जुह्वतीति यज्ञहुतो ऋत्विजः ।... एतेषां देहे तिष्ठामि ॥ 15. शरे चकाराद्धनुषि च संग्रामं जित्वा विनिर्गते पुरुषे संग्रामभूमावेव मृते पतिते शवभूतेऽपि स्वर्गसभां प्रयाते जीवे च... 16... वरे विवाहोद्यते ।... शिरसा स्नातः स्नातशिरास्तस्मिन् । श्वेतपुष्पेषु... रम्येषु प्रदेशेषु पुलिनादिषु सरिद्वरासु महानदीषु चाहं स्थिता ॥

सरःसु पूर्णेषु तथा जलेषु
सशाद्वलायां भुवि पद्मखण्डे ।
वने च वत्से च शिशौ प्रहृष्टे
साधौ नरे धर्मपरायणे च ॥ १७ ॥

आचारसेविन्यथ शास्त्रनित्ये
विनीतवेषे च तथा सुवेषे ।
सुशुद्धदान्ते मलवर्जिते च
मृष्टाशने चातिथिपूजके च ॥ १८ ॥

स्वदारतुष्टे निरते च धर्मे
धर्मोत्कटे चात्यशनाद्विमुक्ते ।
सदा सपुष्पे ससुगन्धिगात्रे
सुगन्धलिप्ते च विभूषिते च ॥ १९ ॥

18. ०वेषे C[1,2] (bis). सुशुद्धे C[1,2]. मिष्टा० C[1,2]. 19. च सुगन्धि० C[1,2].

17. सजलपूर्णेषु सरःसु निर्मलेषु जलेषु हरिततृणाच्छन्नायां भुवि पद्मखण्डे... फलपुष्पवति वने वत्सेऽभिनवजाते शिशौ स्तनंधये प्रहृष्टे हर्षयुते... 18... सुशुद्धो जितबाह्येन्द्रियो दान्तो जितमनस्कः । मल-वर्जितो निष्पापो मृष्टाशनः शुद्धान्नभोक्ता ।... 19. स्वदारेष्वेव तुष्टः परदारविमुखः । धर्मे निरतो धर्मैकनिष्ठः ।... अत्यशनाद्विमुक्तोऽतिभोज-

सत्ये स्थिते भूतहिते निविष्टे
क्षमान्विते क्रोधविवर्जिते च ।
स्वकार्यदक्षे परकार्यदक्षे
कल्याणचित्ते च सदा विनीते ॥ २० ॥

नारीषु नित्यं सुविभूषितासु
पतिव्रतासु प्रियवादिनीषु ।
अमुक्तहस्तासु सुतान्वितासु
सुगुप्तभाण्डासु बलिप्रियासु ॥ २१ ॥

संमृष्टवेश्मासु जितेन्द्रियासु
कलिव्यपेतासु पथिस्थितासु ।
धर्मव्यपेक्षासु दयान्वितासु
स्थिता सदाहं मधुसूदने तु ॥ २२ ॥

---

22. कलिव्यपेतास्वविलोलुपासु V[1-3]; ०सु विलोलुपासु C[1,2].

---

नाद्रहितः । सर्वदा पुष्पैर्युक्तः । सुगन्धि गात्रं येषां तैः सहितः । स्वयं च सुगन्धलिप्तः । विभूषितः कटककुण्डलादिभिस्तस्मिंश्च ॥ 20. सत्यवक्तरि ।... निविष्टो गृहस्थः... 21. नानाविधभूषणभूषितासु नारीषु... 22. संमृष्टानि मार्जनलेपनादिभिः संस्कृतानि वेश्मानि याभिस्ताः ।... कलहपराङ्मुख्यो नित्यतृप्तस्वभावाः । धर्मे विशिष्टापेक्षा यासां ताः ।...

निमेषमात्रं च विनाकृताहं
न जातु तिष्ठे पुरुषोत्तमेन ॥ २३ ॥ ९९ ॥

---

धर्मशास्त्रमिदं श्रेष्ठं स्वयं देवेन भाषितम् ।
ये द्विजा धारयिष्यन्ति तेषां स्वर्गे गतिः परा ॥ १ ॥
इदं पवित्रं मङ्गल्यं स्वर्ग्यमायुष्यमेव च ।
ज्ञानं चैव यशस्यं च धनसौभाग्यवर्धनम् ॥ २ ॥
अध्येतव्यं धारणीयं श्राव्यं श्रोतव्यमेव च ।
श्राद्धेषु श्रावणीयं च भूतिकामैर्नरैः सदा ॥ ३ ॥
॥ इति वैष्णवे धर्मशास्त्रे शततमोऽध्यायः ॥
॥ समाप्ता चेयं श्रीविष्णुस्मृतिः ॥

---

23 om. $C^{1,2}$. After the comment on C, 3, $V^{1-4}$ add the following: इदानीं तस्यैव नित्यकाम्यत्वमाह । य इदं पठते नित्यं भूतिकामो नरः सदा । यो नरस्त्रैवर्णिकः पुमान्न स्त्री इदं शास्त्रं पठते स सदा भूतिभिः काम्यते । इदं रहस्यं परमं कथितं वसुधे तव । मया प्रसन्नेन जगद्धितार्थम् । सौभाग्यमेतत्परमं पवित्रम् ( रहस्यम् $V^{1-3}$ $C^{1,2}$ ) । दुःस्वप्ननाशं वहुपुण्ययुक्तम् । शिवालयं शाश्वतधर्मशास्त्रम् ॥ The clause इदं etc. is found in $C^{1,2}$ as well; but there can be no doubt that this entire passage is a modern addition. See the translation.

---

C, 1. ये द्विजास्त्रैवर्णिकाः स्वयमन्यैर्वा धारयिष्यन्ति ।... 3. $V^4$ $C^{1,2}$ end with the above clause, but $V^{1-3}$ add a comment on the latter part of it, which is followed by a strongly corrupted Appendix, consisting mainly of an उत्तराचरितम्, which is designated as the 101. chapter.

# अथ श्रीविष्णुस्मृत्यनुक्रमणिका ॥




| प्रकरणम् । | पृष्ठाङ्कः । |
| --- | --- |
| अथ प्रथमाध्याय उपोद्घात-प्रकरणम् ... ... | १ |
| द्वितीयाध्याये वर्णाश्रमधर्माः | १० |
| तृतीयाध्याये राजधर्माः ... | ११ |
| चतुर्थेऽर्थदण्डः ... ... | १७ |
| पञ्चमेऽष्टादशपदेषु दण्डः ... | १७ |
| षष्ठेऽधमर्णादिविचारः ... | २९ |
| सप्तमे लेख्यम् ... ... | ३२ |
| अष्टमे साक्षिणः ... ... | ३३ |
| नवमे समयक्रिया ... | ३६ |
| दशमे धटदिव्यम् ... | ३८ |
| एकादशेऽग्निदिव्यम् ... | ३९ |
| द्वादश उदकदिव्यम् ... | ४१ |
| त्रयोदशे विषदिव्यम् ... | ४१ |
| चतुर्दशे देवोदकदिव्यम् ... | ४२ |
| पञ्चदशे द्वादश पुत्राः ... | ४३ |
| षोडशे विविधोत्पत्तिः ... | ४५ |
| सप्तदशे धनविभागः ... | ४६ |
| अष्टादशे नानाजातिभागः ... | ४८ |
| एकोनविंशे निर्हरणम् ... | ५१ |
| विंशे शोकापनोदकवाक्यानि | ५३ |
| एकविंश आद्याः क्रियाः ... | ५९ |
| द्वाविंश आशौचनिर्णयः ... | ६१ |
| त्रयोविंशे द्रव्यशुद्धिः ... | ६८ |
| चतुर्विंशे विवाहनिरूपणम् ... | ७४ |
| पञ्चविंशे स्त्रीधर्माः ... ... | ७६ |
| षड्विंशे सवर्णासवर्णस्त्रीधर्माः | ७७ |
| सप्तविंशे गर्भाधानादिसंस्काराः | ७८ |
| अष्टाविंशे ब्रह्मचारिधर्माः ... | ८० |
| एकोनत्रिंश आचार्यलक्षणम् ... | ८४ |
| त्रिंश अध्ययनधर्माः ... | ८५ |
| एकत्रिंश अतिगुरुलक्षणम् ... | ८८ |
| द्वात्रिंशे गुरुधर्मातिदेशविषयाः | ८९ |
| त्रयस्त्रिंशे प्रायश्चित्तोपोद्घातः | ९१ |
| चतुस्त्रिंशेऽतिपातकस्वरूपम् | ९१ |
| पञ्चत्रिंशे महापातकस्वरूपम् | ९२ |
| षट्त्रिंशेऽनुपातकस्वरूपम् ... | ९२ |
| सप्तत्रिंश उपपातकविभागः ... | ९३ |
| अष्टात्रिंशे जातिभ्रंशकरवि-भागः ... ... | ९५ |

| प्रकरणम् । | पृष्ठाङ्कः । |
|---|---|
| एकोनचत्वारिंशे संकरीकरण-विभागः ... ... | ९६ |
| चत्वारिंशेऽपात्रीकरणविभागः | ९६ |
| एकचत्वारिंशे मलावहविभागः | ९६ |
| द्वाचत्वारिंशे प्रकीर्णकप्राय-श्चित्तम् ... ... | ९७ |
| त्रयश्चत्वारिंशे नरककथनम् ... | ९७ |
| चतुश्चत्वारिंशे दुर्योनिकथनम् | १०० |
| पञ्चचत्वारिंशे रोगविशेषकथनम् | १०२ |
| षट्चत्वारिंशे कृच्छ्राणि ... | १०४ |
| सप्तचत्वारिंशे चान्द्रायणलक्षणम् | १०६ |
| अष्टाचत्वारिंशे यावकव्रतम्... | १०७ |
| एकोनपञ्चाशत्तमे वैष्णवव्रतानि | १०९ |
| पञ्चाशत्तमे ब्रह्महत्याप्रायश्चित्तम् | १११ |
| एकपञ्चाशत्तमे सुरापानप्राय-श्चित्तम् ... ... | ११४ |
| द्वापञ्चाशत्तमे सुवर्णस्तेयप्राय-श्चित्तम् ... ... | १२१ |
| त्रयःपञ्चाशत्तमे गुरुतल्पप्राय-श्चित्तम् ... ... | १२३ |
| चतुःपञ्चाशत्तमे संसर्गप्रायश्चित्तम् | १२४ |
| पञ्चपञ्चाशत्तमे रहस्यप्रायश्चित्तम् | १२७ |
| षट्पञ्चाशत्तमे सूक्तादीनि ... | १३० |
| सप्तपञ्चाशत्तमेऽननुतापित्यागः | १३१ |
| अष्टापञ्चाशत्तमेऽर्थविवेकः ... | १३३ |
| एकोनषष्टितमे गृहाश्रमधर्माः | १३४ |
| षष्टितम आह्निकम् ... | १३७ |
| एकषष्टितमे दन्तधावनम् ... | १३८ |

| प्रकरणम् । | पृष्ठाङ्कः । |
|---|---|
| द्वाषष्टितम आचमनम् ... | १३९ |
| त्रयःषष्टितमेऽध्वकालकार्याणि | १४० |
| चतुःषष्टितमे स्नानविधिः ... | १४२ |
| पञ्चषष्टितमे विष्णुपूजनम् ... | १४५ |
| षट्षष्टितम उक्तोपचारद्रव्य-विवेचनम् ... ... | १४७ |
| सप्तषष्टितमे वैश्वदेवम् ... | १४७ |
| अष्टाषष्टितमे भोजनविधि-निषेधः ... ... | १५२ |
| एकोनसप्ततितमे स्त्रीसंगमे निषेधः ... ... | १५४ |
| सप्ततितमे शयननिषेधः ... | १५५ |
| एकसप्ततितमे स्नातकधर्माः | १५६ |
| द्वासप्ततितमे दमयमौ ... | १६० |
| त्रयःसप्ततितमे श्राद्धप्रस्तावः | १६१ |
| चतुःसप्ततितमेऽष्टकाश्राद्धम् | १६६ |
| पञ्चसप्ततितमे देवतानिर्णयः | १६६ |
| षट्सप्ततितमे नित्यश्राद्धकालाः | १६८ |
| सप्तसप्ततितमे नैमित्तिकश्राद्ध-कालाः ... ... | १६८ |
| अष्टासप्ततितमे काम्यश्राद्ध-कालाः ... ... | १६८ |
| एकोनाशीतितमे श्राद्धोपकर-णानि ... ... | १७१ |
| अशीतितमे द्रव्यविशेषेण तृप्ति-विशेषः ... ... | १७२ |
| एकाशीतितमे श्राद्धभोजनधर्माः | १७३ |
| द्व्यशीतितमे श्राद्धानर्हाः ... | १७४ |

| प्रकरणम् । | पृष्ठाङ्कः । |
|---|---|
| त्र्यशीतितमे पङ्क्तिपावनाः ... | १७६ |
| चतुरशीतितमे श्राद्धे वर्ज्यदेशाः | १७६ |
| पञ्चाशीतितमे श्राद्धार्हदेशाः | १७७ |
| षडशीतितमे वृषोत्सर्गः ... | १८० |
| सप्ताशीतितमे कृष्णाजिनदानम् | १८२ |
| अष्टाशीतितम उभयतोमुखी-दानम् ... ... | १८३ |
| एकोननवतितमे कार्त्तिकस्नानम् | १८३ |
| नवतितमे प्रकीर्णकदानानि | १८४ |
| एकनवतितमे कूपारामतडागादिदानम् ... ... | १८७ |
| द्वानवतितमेऽभयादिदानम् | १८९ |
| त्रयोनवतितमे पात्रविशेषेण फलविशेषः ... ... | १९१ |
| चतुर्नवतितमे वानप्रस्थधर्माः | १९२ |
| पञ्चनवतितमेऽवशिष्टा वानप्रस्थधर्माः ... ... | १९३ |
| षण्णवतितमे संन्यासिधर्माः | १९४ |
| सप्तनवतितमे ज्ञानोपायाः | २०० |
| अष्टानवतितमे विष्णुस्तुतिः | २०३ |
| एकोनशततमे लक्ष्मीस्तुतिः | २०६ |
| शततम एतच्छास्त्राध्ययनफलम् | २१३ |

IV

# INDEX TO THE VEDIC MANTRAS

*quoted in the Vishṇu-smṛiti.*

This Index does not include short sacrificial formulas and invocations, and those Mantras which are quoted by their names only, such as *e. g.* the Purushasūkta. The last word or two words in most of the Prati'kas have been supplied from the Commentaries of Nandapaṇḍita and Devapa'la (Ka'ṭhakagṛihya-bha'shya ), and from the Saṃhita's, Bra'hmaṇas, and Su'tras. See the references in the translation.


अत्र पितरो मादयध्वं ७३, २२.
अन्तरीक्षं दर्विरक्षता ७३, १८.
अन्नं च नो बहु भवेद् ७३, ३०.
अपयन्त्वसुरा ७३, ११.
अमृता वागमृता ७३, १२.
अम्बा नामासि ६७, ७.
अयं यज्ञः परमो ७३, १३.
अश्विनोः प्राणस्तौ ते ६५, २.
अहोरात्रैः समंधिकैर् ७३, १५.
आदित्या रुद्रा वसवो ७३, १२.
आपो हि ष्ठा मयोभुवस् ६४, १८; ६५, ३.
आ मे यन्तु पितरो ७३, १२.
इदमापः प्रवहत ६४, १८; ६५, ६.
इह रतिरिह रमध्वम् ८६, ९.
ऊर्जं वहन्तीरमृतं ७३, २३.
एतं युवानं पतिं ८६, १६.
एतत्ते तत ये च २१, १०.
एतद्भवद्भ्यो भवतीभ्यो ७४, ८.
एतद्वः पितरो ७३, १२-१३.
एत पितरो मनोजवैर् ७३, १२.
तद्विष्णोः परमं पदं ६४, २०.
तेजोऽसि शुक्रममृतम् ६५, ११.
दधिक्राव्णो अकारिषम् ६५, १२.
दातारो नः प्रवर्धन्तां ७३, २८.
देवाश्च पितरश्चैतत् ७३, २६.
द्यौर्दर्विरक्षता ७३, १९.
धूरसि धूर्व धूर्वन्तं ६५, १०.
पिता वत्सानां पतिर् ८६, १३.
पुनर्मामैत्विन्द्रियम् २८, ५१.
पुष्पावतीः प्रसूवतीः ६५, ९.
पूषा गा अन्वेतु नः ८६, ९.
पृथिवी दर्विरक्षता ७३, १७.
ब्रह्मा देवानां पदवीः ४८, ६.
मा मे क्षेष्ठा बहु मे ७३, २५.
यद्वः क्रव्याद् ७३, १५.

V


यन्मे प्रकामादथवा ७३, १५.
यन्मे माता प्रलुलोभ ७३, १२.
यन्मे रामः शकुनिः ७३, २६.
यास्तिष्ठन्ति या धावन्ति ७३, १२.
युञ्जते मन उत युञ्जते ६४, २२; ६५, २.
युवा सुवासाः परिवीत ६५, ८.
येऽत्र पितरः प्रेता ७३, २०.
ये देवा मनोजाता ४८, ८.
ये मामकाः पितरः ७३, १३.
रथेष्वक्षेषु वृषभराजा ६५, ७.
वाजे वाजेऽवत वाजिनो ७३, ३२.
विश्वे देवाः प्रीयन्ताम् ७३, २७.
वीरान्नः पितरो धत्त ७३, २१.
शं न आपो धन्वन्या ६५, ५.
शं नो देवीरभिष्टय ८६, ११.
संसृजतु त्वा पृथिवी २१, १४.
समानी व आकूतिः ७१, १४.
सर्वांस्तानग्न आवह ७३, १२.
सुप्रोक्षितम् ७३, २५.
स्नाताः [श्रान्ताः] प्रीता [पीता] भवत ४८, १०.
हिरण्यगर्भः समवर्तताग्रे ६५, १२.
हिरण्यवर्णाः शुचयः ६४, १५; ८६, ११.

# AN ALPHABETICAL LIST

*Of those terms in the Vishṇu-smṛiti which appear to be important for the purposes of Sanskrit Lexikography.**


अंशग्राहिन् १५, ३९.
अंशुपट्ट २३, २१.
अकुटिल २७, २१.
अक्रीणन्त् ५, १२९.
अक्षय्योदक २१, ४; ७३, २७.
अक्षार ६२, ५.
अक्षिकूट ९६, ९२.
अगन्धि (अगन्धिन्) ६६, ६; ७९, ५.
अगस्त्याश्रम ८५, २९.
अग्नौकरण २१, १३.
अग्नितुण्ड ४३, ३४.
अग्रतस्थ ९९, ७.
अङ्ग १, ४.
अच्युतार्चन ९८, ७१.
अतिकपिल २४, १५.
अतिक्रमण ५, १८; ५, १९२.
अतिक्रूरमृदु १२, ४.
अतिगुरु २१, १.
अतितूर्णम् ६३, ११.
अतिद्रुतम् ११, ६.
अतिमनोरम १, २६.
अतिविलम्बितम् ११, ६.
अत्रिगोत्रा ३६, १.
अधःखात २१, ४.
अध्वरगुरु १, ५६.
अनग्न्युष्ण ६२, ५.
अनभिगमन २५, १०.
अनभिधावन्त् ५, ७४.
अनभिरति २५, ७.
अनवगुण्ठितशिरस् ६०, २३.
अनवस्थान २५, ११.
अनागस् ४८, १०.
अनाथ १९, ५.
अनादिनिधन ६५, १.
अनादिमध्यनिधन ९८, १३.
अनाद्यन्तत्व २०, २१.
अनार्द्रकरमुख ६८, ३५.
अनार्द्रपाद ६८, ३४.
अनाहार्य १, ३; ७४, २; ५, १८५.
अनिच्छु ६, २८.
अनिर्दिष्ट ८, ४; २८, ३०.
अनिर्मोच्य ५, १८१.
अनुहरण १६, १६.
अनौरस २२, ४३.
अन्योन्यापतितत्यागिन् ५, ११३.
अपथदायिन् ५, ९१.
अपरिनिर्मित ९८, ५१.
अपाल ५, १४१.
अप्रच्छादित ६०, ३.
अप्रतिकर्मक्रिया २५, ९.
अफेनिल ६२, ५.
अब्लिङ्ग ५६, १६.
अभागहारिन् १५, ३२.
अभिगामिन् १७, ४.
अभिप्लव ४४, १६.
अमांसाशन १९, १५.
अमुक्त ६८, ३.
अमुक्तहस्तता २५, ५.
अमृत ४८, १०.
अमेध्यभुज् ५१, ४१.
अम्बुजीविन् ९, २९.
अयोग्य ५, ११६.
अरागद्वेषिन् १२, ३.
अर्थदूषण ३, ५२.
अर्थहर १५, ४०.
अर्धहर १८, ३२.


*See the Preface.

अर्धिक ५७, १६.
अर्बुद् ९६, ७६.
अवशार्धयितर् ५, २२.
अवहनन ९६, ९१.
अविशोधन ११, ९.
अव्रात्य ४८, २२.
अशक्तभर्तृक ५, १८.
असाक्षिन् ८, १, ५.
असमर्थ ९, २३, २५.
अस्वतन्त्रता २५, १२.
आक्रोशयितृ ५, २३.
आक्षेपण ५४, १४.
आगन्तुक ९६, २८.
आच्छादक ८६, ८.
आदित्य ७८, १.
आदिदेव १, १०; ९८, ९.
आद्यद्वार ३, ५३.
आर्धीकृत ५, १८१.
आनाभिमग्न १२, ३.
आप्त ५८, १०.
आयसी ४३, ३८.
आर्द्र ५४, १८.
आर्षी २४, ३१.
आस्फोटन ७१, ७१.
इन्द्रप्रयाण ३०, ६.
इहामुत्र ३०, २९.
उग्रगन्धि (उग्रगन्धिन्) ६६, ५; ७१, ११; ७९, ५.
उज्जिहीर्षु ५७, १३.
उत्तरमानस ८५, ३६.
उत्तरापरशिरस् ७०, २.
उदककृच्छ्र ४६, १४.
उद्गूरयितृ ५, ६०.
उभयतःशिक्य १०, ३.
उष्णीष ६४, १४.
ऊर्जस्पति ९८, १७.
ऊर्ध्वशुष्क ६१, ८.
ऋतावृध् ४८, १०.
एककर ५, ४८, ७७; ६२, ५.
एकद्व्यन्तरत्र्यन्तराशिन् ९५, ६.
एकवत् २१, २.
एकव्यूह १, ६१.
एकशृङ्ग ९८, ७८.
ओसज (?) ८५, ५२.
कण्टकिज ६६, ७, ८; ७९, ५, ६.
कण्वाश्रम ८५, ३०.
कनखल ८५, १४.
कामदेव ९८, १०.
कामपाल ९८, १[illegible].
कापायिन् ६३, २६.
कुण्डाशिन् ४५, २४.
कुब्जाम्र ८५, १५.
कुमारधारा ८५, २५.
कुशावर्त ८५, ११.
कुशीलवता ३७, ३२.
कूटव्यवहारिन् ५४, १५.
कूटागार ४३, ४४.
कृतलवण २८, ११; ७९, १८.
कृष्णलोह ५४, १९.
केदार ८५, १७.
कौज ७८, ३.
क्लोमन् ९६, ९१.
क्षुद्रधमनी ९६, ८४.
खण्डपरशु ९८, ७३.
गर्भ २७, १.
गावय ८०, ९.
गृहकारिन् ४४, ३६.
गोसूक्त ५६, १८.
गोनिहार ४८, १६.
घना ९६, ७५.
घातित्व १६, ११.
घृतार्चिस् ९८, ७२.
चन्द्रसूक्त ५६, २०.
चान्द्र ७८, २.
चित्रशिखण्डधर ९८, ६५.
चीविवाक् ४४, २४.
जगत्कारणकारण १, ६१.
जगत्परायण ९८, १००.
जलचर ४१, १; ४४, ६.
जातमृत २२, २६.
जात्यपहारिन् ५, ९९.
जैव ७८, ५.

तत्परता २५, ८.
तथावादिन् ५, २७.
तारिक ५, १३१.
तीर्थ २३, ६१.
तुलाधार १०, ८, ९.
तुषित ९८, ४७.
त्रिसुपर्ण ८३, १६.
त्रिहलिकाग्राम ८५, २४.
दक्षिणापराभिमुख ६१, १२.
दण्डवत् २८, ५.
दिक्पति ९८, २५.
दीन ६३, १५.
दुर्गासावित्री ५६, ९.
दुर्विचिन्तित ४८, १९.
दुष्,-वि २४, ४१.
दुष्ट १२, २.
देव १. १, ४९, ५१; २. ९, ३३; १४, २; ७१, ६०.
देवकृत ५६, ४.
देवमानुषज (v. l.) ९५, १६.
देवारिबलसूदन १, ४९.
दैवी २४, ३०.
द्रुपदा सावित्री ६४, २१.
द्रुहिण ९८, ८०.
द्वादश ४, ८.
द्विजत्व २८, ३९.
धमनी ९६, ८४.
धर्मयोनि १, ५४.
धर्मवसुप्रद ९८, ९१.
धर्माङ्ग १, ५४; ९८, ९०.
धर्माधर्मज्ञ १, ५४.
धुर् ६५, १०.
धृतार्चिस् १, ५९.
नग्न ६४, ५; ६८, १५; ८२, २७.
नडन्तिका ८५, १९.
नागवन ३, १६.
नास्तिकवृत्ति ५४, १५.
निखेय ५, २५.
निराशिस् ९६, २१.
निर्माणकारक १, ५५.
निर्वापक ४५, २१.
निःशेषकृत् ६८, ४४.
न्यङ्गता ५, ३३.
पच् ४३, २३.
पञ्चक ७३, ५.
पद्मधाराधर ९८, ७६.
पयस्पति ९८, २२.
पर्णकृच्छ्र ४६, २३.
परिनिर्मित ९८, ५०.
पात्र २१, १४, १७.
पार्श्विक ५८, ११.
पिण्डिक ९६, ९२.
पुर ९७, १५.
पुरुषव्रत ५६, १५.
पुरोडाशहर ९८, ६७.
पुष्पोपगम ५, ५६.
पृश्निगर्भ १, ५९.
प्रचार १८, ४४.
प्रजाधर ९८, ६४.
प्रज्वालन २३, ४५.
प्रतर्दन ९८, ४९.
प्रतिरूपक ५८, ११.
प्रतिरूपविक्रयिन् ५, १२४.
प्रभविष्णु ९७, १९.
प्रभास ८५, २६.
प्रविधान २०, ४६.
प्राजापत्य २४, ३२.
फलोपगम ५, ५५.
बन्धनिक ५१, ९.
बलिप्रिय ९९, २१.
बस्तिशीर्ष ९६, ९२.
बहुसर्पिष्क ८६, १८.
बालातप ७१, ४६.
बिन्दुक ८५, १२.
बौध ७८, ४.
ब्रह्मदेयानुसंतान ८३, १५.
ब्रह्मप्रिय ९८, ३७.
ब्रह्मरूप ९८, २९.
ब्रह्मवर्चस्य ७८, १०.
ब्रह्मायु २०, १६.
ब्राह्मणप्रिय ९८, ३०.
ब्राह्मी २४, २९.
भगास्य ४५, २४.
भर् १०, ४.

भागापहारिन् १८, ३४.
भारुण्ड ५६, १३.
भृगुतुङ्ग ८५, १६.
मज्जा २२, ८१.
मतङ्गवापी ८५, ३८.
मधुकैटभसूदन १, ५४.
मध्यम ३, ३८.
मनोज्ञ ८५, ६३.
मन्त्र १, ५३.
मन्त्रवह १, ५३.
मलिन ६३, ३६.
महत्पति ९८, २६.
महाफल १, ६.
महाबलपराक्रम १, ५०.
महाभास्वर ९८, ४३.
महालय ८५, ५८.
महावर्ति ९०, २०.
महाव्रत ५६, २४.
मात्रा ६५, १४.
मासिकार्थ २१, १९.
मिश्रचौर ४५, १०.
मूलकृच्छ्र ४६, १५.
मृगलोमिक २३, २४.
मृतजात २२, २६.
मृताह २१, ११.
मृष्टाशिन् ४५, २७.
यज्ञगम्य ९८, ५६.
यज्ञनिधन ९८, ५७.
यज्ञमूर्ति १, ५२.
यज्ञयोग ९८, ५५.
यज्ञहुत् ९९, १४.
यत्र क्वचनोत्पादित १५, २७.
यथाभूयस् ७३, २.
युक्ति ७, १२.
योनि २, १३.
रज्जुदाल ५१, २९.
रम्य ९९, १६.
राजसात्त्विक ७, २, ३.
राम ७३, २६.
रूपसौभाग्यवत् ९०, २.
लक्ष्मीपति ९८, २८.
लेख्य १. ७, १२, १३; २. ९८, ६३.
वट् ४३, ३८.
वट ८५, ५, ६६.
वडवा ८५, ३७.
वराहपर्वत ८५, ७.
वशवर्तिन् ९८, ५२.
वसुधा ९९, ५.
वातगुल्मिन् ४५, २७.
वाल्गुद ४४, ३०.
विकर ५, ८१.
विजिह्व ५, २३.
विमांस ५, ४९.
विमेघ ९९, ९.
विरागय् ७१, ५७.
विश्वधर ९८, ६९.
विषत्व १३, ६.
विषमत्व १३, ६.
विष्णुपद ८५, ४०.
वृक्क ९६, ९२.
वृथालिङ्गिन् ८२, ६.
वेण ५१, १४.
वेदाग्न्युत्सादिन् ५४, १३.
वैकुण्ठ ९८, ५९.
व्याधता १६, ९.
व्योमन् १, ५४.
व्रात्यता ३७, १९.
शङ्खचक्रगदाधर १, ५०.
शलाका ९६, ५९.
शीतकृच्छ्र ४६, १२.
शीर्ष ९, २०, २२.
शीलफलक २८, २८.
शुचिश्रवस् ९८, ७०.
शुल्क १७, १८.
शुष्क २३, १६.
शौक्र ७८, ६.
श्मश्रु २३, ५३; ९६, ८५.
श्रीपर्वत ८५, ३४.
श्रीफलकृच्छ्र ४६, १६.
श्लेष्मन् ५४, १९.
श्वजीविन् ५१, १५.
सकूर्च ६१, १६.
सघृत ९०, २७.
संकरसंकर १६, ७.
संकरीकरण ३३, ४; ३९, १, २; ४३, २८; ४४, ७.

सांख्याचार्य ९८, ८६.
सचामर ९९, १३.
सततयायिन् २०, २२.
सतालवृन्त ९९, १३.
सदीपक ६७, ४६.
संधिनी ५१, ४०.
सपुत्र ६, २९.
सपुष्प ९९, १९.
सप्तन् ९८, ४४.
सप्तशीर्ष १, ५६.
सप्तागारिक ९६, ३.
सप्तार्ष ८५, ३९.
सम १, २४.
समय ६, २३; ९, १; ११, ९.
समानव्रतचारित्व २५, १.
समानार्षप्रवर २४, ९.
सर्वतःसर्वेन्द्रियशक्ति ९७, [४.
सर्वहर १८, २८.
सर्वाभयप्रद १, ५५.
सलिलार्णवशायक १,५२.
सशाद्वल ९९, १७.
ससुगन्धिगात्र ९९, १९.
ससुवर्ण ९०, ५३.
सहोपपतिवेश्मन् ५१,१६.
सागम ५, १८५.
सांगतिक ६७, ३५.
साधुपरिगृहीत ६४, १७.
सान्न ७४,५,६;९०,१३.
सुगन्धा ८५, २०.
सुगन्धिक ६६, ८.
सुगुप्तभाण्ड ९९, २१.
सुगुप्तभाण्डता २५, ६.
सुचिह्नित १०, ६.
सुतप्त ९९, १.
सुदीप्ता ९९, ५.
सुदुष्पार १, ५१.
सुप्रक्षालित २१, १.
सुप्रजापति ९८, १५.
सुप्रोक्षित ७३, २५.
सुवर्णनाभ ९०, १.
सुवर्णनाभि ८७, ३.
सुसंस्कृतोपस्करता २५,४.
सुसम १, २६.
सुसूक्ष्मेश १, ५७.
सूक्ष्म ९६, ५७.
स्थालक ९६, ७६.
स्पष्टता २७, १.
स्रौव ३५, ५.
स्वधा ९९, ५.
स्वभाव ८५, ५५.
स्वर ९८, ४६.
स्वर्गमार्गपद ८५, ४१.
स्वलिखित ६, २६.
स्वहस्त ७, १३.
स्वाचान्त २१,१,१६;६५, १; ७३, २.
स्वाहा ९९, ५.
हरित ५, ८५.